

# सर्वतन्त्रसिद्धान्तपदार्थलक्षणसङ्ग्रहः ।

केनचिद्भिक्षुगौरीशङ्करेण सङ्गृहीतः ।



स च चैत्रशुक्लपूर्णिमायां त्र्यशीत्युत्तरशतनवाधिकैकसहस्र ( १९८३ ) विक्रमाब्दे
मणिलाल इच्छाराम देसाई 'गुजराती पत्रस्य'
मुद्रणालय, वेक—हाऊस लेन, काळाघोडा कोट—
मुम्बय्याख्यपत्तने मुद्रापयित्वा प्रकाशितः ।

द्वितीयावृत्तिः ।

प्राप्तिस्थानम्—
मनभरी देवी ग्राम पुठी पोष्ट जमालपुर जिल्हा हिसार ।

मूल्यम्— ॥।) आणकाः ।

# भूमिका ।



श्रीमत्सूत्रकारान् भाष्यकारांस्तथा तदनुसारिणः पूर्वाचार्य्यान् भूयो भूयो नमस्कृत्य स्वल्पभूमिका वर्ण्यते ।

इमं ग्रन्थं ये जनाः पठिष्यन्ति तान्प्रति मम सविनयं प्रार्थनास्ति, ते जना इमं ग्रन्थं निजवासनापरवशेन न पश्यन्तु किन्तु शास्त्रानुसारविचारं कुर्युस्तदा तेषां सर्वतन्त्रसिद्धान्तपदार्थलक्षणसङ्ग्रहनिरीक्षणं सफलं भविष्यतीति ।

यद्यप्यस्य सर्वतन्त्रसिद्धान्तपदार्थलक्षणसङ्ग्रहस्य प्रकाशो मम लेखनीद्वारा एकवारं पूर्णतया श्रीभागीरथीतटेऽभूदेव, तथापि योऽयं ममाभिलाष आसीत्; यदयं ग्रन्थः शतसहस्रधा भूत्वा देशदेशान्तरवर्त्त्यनेकविद्वद्वृन्ददृष्टिगोचरो भूत्वा पवित्रो भवेत्तथा विद्याभिलाषिणां विद्यार्थिगणानां स्वल्पव्ययेन मित्रं भवेदिति । तत्पूर्तिर्हि मच्छक्त्यतिक्रमणीयाऽऽसीत्, तदस्य ग्रन्थस्य लेखने विरक्तानां महात्मनां परिश्रमं ज्ञात्वा हिस्साराख्यनगरनिवासिन्या वैश्यधर्मावलम्बिन्या सज्जनसाधुष्वत्यन्तश्रद्धाभक्ति-

शीलया श्रीमत्या मनभर्य्याख्यया देव्या सज्जनपुरुषाणां सुखेन प्राप्त्यर्थं मम सङ्कल्पानुसारं मुद्रापणार्थं प्रार्थनाऽकारि, तदस्मदीयाऽऽज्ञानुसारं साधुजनेभ्यो योग्याधिकारिभ्यश्च धर्मार्थवितरणार्थं न्यायोपार्जितनिजद्रव्यव्ययेनेमं मुद्रापयित्वा प्रदानं कृतं वैक्रमीये १९७९ संवत्सरे । लोके चैतादृशा जनाः स्वधर्मस्थिताः सद्ग्रन्थप्रवर्तका दुर्लभाः सन्ति ।

किञ्चान्नादि दातारो बहवः सन्ति परन्त्वन्नादि ग्रहीतॄणां केवलं शारीरकमेव स्वल्पसुखलाभो भवति सद्ग्रन्थेभ्यो धर्मज्ञानोपलब्धिद्वाराऽक्षयात्मसुखमपि लभन्ते, अतः सर्वदानेभ्यः सच्छास्त्रप्रदानेनाधिकतरं फलं भवति ।

अत्र कदाचिद्दृष्टिदोषेण सीसकाक्षरभङ्गाद्वा यदि कुत्रचित्स्थानेऽशुद्धिरस्ति सा सदयीभूय सुजनैः क्षन्तव्या ।

ये खलु कान्ताकाञ्चनरहितास्तेभ्यो मूल्यमन्तरा निम्नलिखितस्थाने पत्रप्रेषणेनायं ग्रन्थस्तत्सेवायां प्रेषितो भविष्यतीति ।

मनोभरी देवी ग्रामश्च पुठी
पत्रालयो जमालपुरम् ( हिस्सार )

# सङ्केतः।

## सर्वतन्त्रसिद्धान्तपदार्थलक्षणसङ्ग्रहस्य साङ्केतिकवर्णचिह्नादीनां विवरणम्।

एतत्पुस्तकस्य प्रत्येकपृष्ठे लक्षणादि लिखितम्। तस्यान्तिमलक्षणादेर्वर्णं त्र्यक्षरपर्यन्तं विन्यस्तमभवत्। तद्दृष्टिमात्रेण यदक्षरपर्यन्तं लक्षणं तत्पृष्ठारूढीभूतं तद्बोधो भविष्यति। तेनेष्टलक्षणानामनायासेन लाभो भविष्यति।

| | | |
|---|---|---|
| अ० { अद्वैतग्रन्थे / अद्वैतमते | पु० पुस्तकान्तरे | तत्तच्छब्दे द्रष्टव्यम् |
| | म० मतान्तरे | वे. { वेदान्तग्रन्थे / वेदान्तमते |
| ग्रं० ग्रन्थान्तरे | मी० मीमांसकाः | |
| नै० नैयायिकाः | यो० { योगग्रन्थे / योगमते | सां. { साङ्ख्यग्रन्थे / साङ्ख्यमते |
| न्या० { न्यायग्रन्थे / न्यायमते | ल०त.श.द्र. लक्षण- | |

इत्यक्षरस्य ग्रहणं कृतम्।

तत्तद्ग्रन्थनामानि विस्तरभिया नोक्तानि। समानार्थकद्वित्र्यादिशब्देष्वेकस्थले उपस्थितेषु तदुत्तरं तज्ज्ञापकं एवं प्रकारं वेष्टनचिह्नं ( ) दत्तम्।

विशेषलक्षणसमापनात् परं विशेषलक्षणारम्भात्पूर्वञ्च पुष्पाकारचिह्नं * कृतम्।

येषां प्रसिद्धैकविषयकलक्षणं लिखित्वा तत्सङ्ख्यानामङ्कपातः कृतः।

तत्रोक्तप्रसिद्धलक्षणमेकत्वेन गणयित्वा द्व्यादिसङ्ख्याङ्काः स्थापिताः।

# प्रार्थना ।

अनेक धन्यवाद उस करुणामय जगदीश्वर को है कि जिसकी अपार कृपा से मैं ने भी सज्जन समाज के सेवा भागके भागी बननेके लिये तथा महात्माओं के वचनों कूं प्रकाश कर पुण्य विशेषके लाभके लिये आज मुझे आप सज्जन महाशयों की सेवा में इस मनोहर ग्रन्थ के भेट करने का अवसर प्राप्त हुआ है ।

मेरा बहुत दिनों से विचार था कि मैं भी महात्माओं की स्मृतिका विषय होऊं तथा यथा योग्योपाय भी किया परन्तु एक तो स्त्रीका शरीर दूसरा शास्त्र में विशेष प्रवेश नहीं तो भी इस अपूर्व ग्रन्थ के छपवाने करके संपूर्ण विद्वानों के कर कमलों में मैं आरूढ होऊंगी, दृष्टान्त जैसे भौंरा कमल के संबन्धसे महादेवके मस्तक में आरूढ होवे है तैसे मैं मनभरी भी सर्व महात्मा तथा सत्संगी जनों के लाभार्थ इस पुस्तक को छपवाय के तिनों के हस्त उपरि स्थित होवांगी ।। इति ।।

काशीस्थप्रधानप्रथनैकोनपञ्चाशत् ( ४९ ) पण्डितानां सम्मतयः—ये सन्ति विषयाश्चास्मिन् ते न दृष्टाः परत्र वै, अत्र चैव समावेश्य सर्वसिद्धान्तलक्षणम् ।

जगन्नाथपुरीस्थसंस्कृतकालेजाद्रामचन्द्रमिश्रः सूचयति—ग्रन्थेऽस्मिन्नधीते सर्वविषयाणां परिभाषा ज्ञायेत बहुग्रन्थावलोकनेन यादृशं ज्ञानं विद्यार्थिनां सम्पद्येत तादृशञ्च खल्वेकमिदमवलोक्यापि सञ्जायेत अतोऽयं ग्रन्थः सर्वथा व्युत्पित्सूनामन्तेवासिनाञ्चुपयोगीभवेदिति ।

कलिकत्तास्थसंस्कृतसाहित्यपरिषत्सूचयति—संस्कृतभारतीमयमिदं पुस्तकं विविधपारिभाषिकशब्दानामवबोध एव संस्कृतदर्शनशास्त्रस्याधिगमे प्रथमो दुरितक्रमः प्रत्यूह इव प्रतिभाति ।

म्हैसूरस्थराजकीयपाठशालायाः केशवशास्त्री सूचयति—तन्त्रग्रन्थव्याख्यातृभिर्निरुक्तोऽपि तत्तत्प्रकरणानुरोधेनैव, न तत्त्वतः, तत्त्वतः, निरुक्तो अपि नैकत्र सर्वे ।

काञ्चीतः—प्रतिवादिभयङ्करानन्ताचार्यः सूचयति—अयं ग्रन्थः कोशरूपस्सैद्धान्तिकानां पदानां भिक्षुकेण सङ्गृहीतः । अत्र चाकारादिक्रमेण तान्त्रिकाणां बहूनां शब्दानां सङ्ग्रहस्तेषां व्याख्या च कृता वर्तते ।

वृन्दावनतः—राधाचरणगोस्वामीविद्यावागीशः सूचयति ग्रन्थोऽयं विद्वन्मान्यः छात्राणामभ्यासार्थमादावेव पाठ्यः ।

वड़ोदापेटलादस्थनारायणशालायाः अमृतलालः सूचयति—गूढार्थकशब्दानां प्रवृत्तिनिमित्तार्थाः पदार्थस्वरूपनिर्धारणोपयोगीनि इतरव्यावृत्तिबोधजनकानि च लक्षणान्यत्र सम्यगुपनिबद्धानि ।

नेपालस्थराजकीयपाठशालायाः पण्डितकीर्त्तिनाथः. । सागरस्थजैनपा० लोकनाथः. । जवलपुरस्थहितकारिणीपा० गङ्गाविष्णुः. । इन्दोरस्थदु० पा० दरवारीलालः । काङ्गडीगुरुकुलात्. । मुम्बई श्रीवेङ्कटेश्वरात्. । कुम्बकोननाचियारकोयिलतः स्वामिकृष्णाचार्यः । चम्पारण्यस्थऋषिकुलाद्गदाधरझा । भिवानीस्थब्रह्मचर्याश्रमात्सीतारामशास्त्री. । जम्बूस्थराजकीयमहाविद्यालयश्रीवेदमन्दिराद्रामप्रपन्नः काकारामश्च. । लाहौरस्थविश्वविद्यालयात्. । OXFORD N. University Library. । एवमन्यनगरवासिभिर्बहुभिः सुधीभिरस्य सङ्ग्रहस्य प्रामाणिकत्वमङ्गीकृतम् । तथाहि—सर्वतन्त्रसिद्धान्तपदार्थलक्षणसङ्ग्रहः—भिक्षुगौरीशङ्करेण सङ्गृहीतः । ग्रन्थेस्मिन्वेदवेदाङ्गदर्शनस्मृतिपुराणकाव्यसाम्प्रदायिकादिविविधशास्त्रप्रतिपादितपदार्थानां सप्तशताधिकद्विसहस्र (२७००) लक्षणानि सन्ति, सर्वविषयोपकारकः सुखप्रवेशसाधनभूतश्च लाक्षणिकनिबन्धोऽद्यावधि केनापि न विहितः ।

मात्सर्यमुत्सार्य महानुभावाः
प्रसादमाधाय विशोधयन्तु ॥ ७ ॥

क्व ग्रन्थकरणं क्व त्वमिति मा जानताऽऽस्तिकाः।
सत्सङ्गानुग्रहः किं किं न करोत्येवमाह वाक् ।८।
न ख्यातिर्लाभपूजादिर्ग्रन्थकरणकारणम् ।
न विद्वत्ताबलं वाऽत्र मुक्तिरेवात्र कारणम् ॥९॥
दूरादसूयां निर्धूय कृपां कृत्वा ममोपरि ।
विलोक्यो लक्षणग्रन्थो बुद्धिमद्भिर्द्विजोत्तमैः १०
नानाविधग्रन्थजातं वीक्ष्य सम्यग्यथामति ।
क्रियते स्वीयबोधाय प्रमादः क्षम्यतां बुधैः ।११।
श्रद्धाधनेन सङ्गृहीतं गौरीशङ्करभिक्षुणा ।
बोधाय वादिबाधाय विदुषां कण्ठभूषणम्॥१२॥

ये नानाशास्त्रनिरीक्षणे
श्रमभियस्तेभ्यो ममैषा क्रिया ।
तत्राप्यशुद्धं यदि किञ्चिदस्ति
तच्छोधनीयं विबुधैर्न मूर्खैः ॥१३॥

तर्ककान्तारचारिण्यः स्खलन्ति प्रायशो गिरः ।
तस्मादधति प्राज्ञा एष धर्मः सनातनः ॥१४॥
मूढस्तु मूढ एवास्ति तत्त्वज्ञस्त्वस्ति तत्त्ववित् ।
तस्मादर्द्धप्रबुद्धा ये ते सन्त्यत्राधिकारिणः॥१५॥

ननु किमर्थं लक्षणसङ्ग्रहाऽऽरम्भो लक्षणानामनुपयोगादिति चेदुच्यते, अस्ति हि महानुपयोगः । तथाहि– यथा विवाहे सलक्षणो वरो लक्षणवतीं कन्यामुपयच्छेतेति ।

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्,
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।

इत्यादिवचनैः स्त्रीपुंससामुद्रिकलक्षणानां विवाह उपयोगात् ।

लिङ्गं सलक्षणं पूज्यं त्यजेल्लिङ्गमलक्षणम्,
तस्मात्सर्वप्रयत्नेन लिङ्गं कुर्यात्सलक्षणम् ।

इत्यादिवचनैर्लिङ्गलक्षणानां तत्पूजादावुपयोगात् एवमन्येषामपि लक्षणानां यथासम्भवमुपयोगाद्युक्त एव लक्षणसङ्ग्रहारम्भ इति ।

लक्षणानामुपयोगः सायणाचार्येणापि न्याय-मालायां दर्शितः तथाहि—

ऋषयोपि पदार्थानां नान्तं यान्ति पृथक्त्वशः,
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चित इति ।

किञ्च लक्षणप्रमाणाभ्यां वस्तुसिद्धिर्न तु प्रतिज्ञामात्रेणेति न्यायादपि पदार्थलक्षणमवश्यमपेक्षणीयम् । तत्र प्रमाणं विहाय लक्षणानि निरूपयामः । प्रसङ्गात्क्वचिदन्यदपि निरूपयिष्याम इति ।

तत्र निखिलतान्त्रिकलक्षणानां झटिति प्राप्तये तेषामानुपूर्विकाकारादिहकारान्तपञ्चाशद्वर्णानां यथाक्रमं सूचीं कृत्वा विन्यासमकुर्वम् । तत्र प्रथमं स्वरवर्णादिलक्षणानां परे हलवर्णादिलक्षणानां शेषे युक्ताक्षरादिलक्षणानां च वर्णक्रमेणैव यथास्थानं संस्थापनं कार्यम् । नान्या कापि सङ्गतिरपेक्षणीया इति ज्ञेयम् ।

प्रतिज्ञोत्तरं निरूपणीयस्य युक्तत्वादिति न्यायानुसरणमिति दिक् ।

## अ

**अकस्मात्त्वम्**—कारणानधीनत्वम् ॥ १ ॥

**अक्रूरत्वम्**
**मृदुत्वम्**— } वृथापूर्वपक्षादिकारिष्वपि शिष्यादिष्वप्रियभाषणादिव्यतिरेकेण बोधयितृत्वम्।

**अक्षरत्वम्**—वर्णस्मारकत्वे सति लिपिसन्निवेशत्वम् ४

**अखण्डत्वम्**—सजातीयविजातीयस्वगतभेदशून्यत्वम्। साङ्ख्यात्मन्यतिव्याप्तिवारणाय सजातीयेत्युक्तम्, आकाशेऽतिव्याप्तिवारणाय विजातीयेति[१] यद्वा त्रिविधपरिच्छेदशून्यत्वम् ॥ ६ ॥

**अखण्डार्थत्वम्**—अपर्यायानेकशब्दप्रकाश्यत्वे सत्यविशिष्टत्वम्। नीलो घट इत्याद्यपर्यायानेकशब्दप्रकाश्ये तादात्म्येन नीलविशिष्टे घटाद्यर्थेतिप्रसङ्गवारणार्थमविशिष्टत्वदलम्, तथा घटः कलशः कुम्भ इत्यादि[२]पर्यायानेकशब्दप्रकाश्येऽविशिष्टे घटादा-

---

१ अपर्यायभूता ये अनेके शब्दाः सत्यज्ञानानन्दादयस्तत्प्रकाश्यत्वे सतीत्यर्थः।

२ कोकिलः पिको वायसः काक इति।

वतिप्रसङ्गव्युदासायापर्यायानेकशब्दप्रकाश्यत्वे सतीति विशेषणदलमिति कल्पतरौ १ अर्थस्याखण्डत्वमसंश्लिष्टत्वम् २ वाक्यस्याखण्डार्थत्वम्-अपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वम्। हस्तः कर इत्यादौ व्यभिचारवारणायापर्यायग्रहणम्, इन्द्रियव्यावृत्त्यै शब्देति, गामानयेत्यादौ व्यभिचारवारणाय संसर्गागोचरेति, वाक्याभासव्यावृत्त्यर्थं प्रमितिग्रहणमिति चित्सुख्याम् ३ संसर्गानवगाहियथार्थज्ञानजनकत्वम् । राजपुरुष इत्यादौ संसर्गपरे वाक्येऽतिव्याप्तिवारणायोक्तं संसर्गानवगाहीति, तत्रैवाभेदतात्पर्यभ्रमात्पदार्थसंसर्गानवगाहि तदभेदभ्रमजनके तत्प्रसङ्गवारणाय यथार्थेतीति वेदान्तपरिभाषायाम् ४ तत्प्रातिपदिकार्थ-(मात्रपर्यवसायि)त्वमिदं लक्षणं बहुपुस्तकेषु दृष्टम् ।

---

१ तत्प्रातिपदिकार्थत्वम्—प्रकृष्टप्रकाशश्चन्द्र इतिवत्तदेकमात्रवस्तुपरत्वम् ।

१ प्रातिपदिकत्वम्—विभक्त्यर्थशून्यत्वे सति व्यक्तिमात्रार्थत्वम् ।

**अखण्डोपाधिः**—अनिर्वचनीयो धर्मः १ असमवेतत्वे सत्यनुगतत्वमखण्डोपाधित्वम् ॥ १४ ॥

**अख्यातिः**—स्वरूपतो विषयतश्चागृहीतभेदेनैकज्ञानम् । एकविषयानेकज्ञानेष्वतिव्याप्तिपरिहारार्थं स्वरूपपदम्, समूहालम्बनज्ञानेऽतिव्याप्तिपरिहारार्थं विषय इति विशेषणमिति न्यायमकरन्दटीकायाम् १ ख्यातेरेव (=भ्रमज्ञानस्यैव) अभाव इति प्राभाकरमते ॥ १६ ॥ [होमः १७

**अग्निहोत्रम्**—आहितेष्वग्निषु सायं प्रातश्चानुष्ठेयो

**अङ्गत्वम्**—तदीयप्रधानफलजनकव्यापारजनकत्वे सति तदीयप्रधानफलाजनकत्वम् । घटादावतिव्याप्तिवारणाय सत्यन्तमिति तिथितत्त्वटीकायाम् १ * वेदार्थज्ञानोपयोगित्वमिति ग्रन्थान्तरे ॥ २० ॥

**अजहल्लक्षणा**—शक्यार्थापरित्यागेन तत्सम्बन्ध्यर्थान्तरे वृत्तिः, यथा शोणो धावतीत्यत्र शोणपदस्य शोणगुणविशिष्टेऽश्वादिद्रव्ये । जहल्लक्षणायामतिव्याप्तिवारणाय शक्यार्थापरित्यागेनेति १ शक्यार्थ-

मन्तर्भाव्यत्वे सत्यर्थान्तरप्रतीतित्वम्, यथा शुक्लः पट इत्यादाविति वेदान्तिमते २ लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिकेति न्या० २३

अज्ञत्वम्—गुरुमुखानधीतशास्त्रत्वम् १ आत्मज्ञानशून्यत्वं वा २ आत्मानं जानातीति ज्ञः न ज्ञः अज्ञः।

अज्ञातत्वम्—प्रमाणजन्यज्ञानाविषयत्वम् १* अज्ञानाश्रयाज्ञानविषयत्वम् ॥ २८ ॥

अज्ञानम्—कार्यमात्रोपादानत्वे सति सदसद्भ्यामनिर्वचनीयम्। अविद्यासंबन्धादिवारणाय सत्यन्तम्, आत्मवारणायोत्तरदलमिति वेदान्ततत्त्वविवेके १ अनादिभावरूपत्वे सति विज्ञाननिरास्यम्। उत्तरज्ञाननिवर्त्यपूर्वज्ञानवारणायानादिरूपेति, ज्ञानप्रागभाववारणाय ज्ञानाभावोऽज्ञानमित्याशङ्कानि-

---

१ सदसद्भ्यामित्युपलक्षणं, सत्त्वेनासत्त्वेन सदसदुभयत्वेन ब्रह्मणो भिन्नत्वेनाऽभिन्नत्वेन भिन्नाऽभिन्नोभयत्वेन सावयवत्वेन निरवयवत्वेन सावयवनिरवयवोभयत्वेन चेति नवधाऽप्यनिर्वाच्यमित्यर्थः।

रासार्थं वा भावरूपेति, आत्मन्यतिव्याप्तिवारणाय ज्ञाननिरास्यमिति तत्त्वप्रदीपिकायाम् २ मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वमज्ञानत्वम्। ज्ञानेनेच्छाप्रागभावः साक्षान्निवर्त्यत इति वदन्तं प्रति मिथ्यात्वे सतीत्युक्तम्, अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्यबन्धेऽतिव्याप्तिनिरासाय साक्षादिति ३ यद्वा अनाद्युपादानत्वे सति मिथ्यात्वम्। ब्रह्मनिरासार्थं मिथ्यात्वमिति, मृदादिनिरासार्थमनादीति, प्रागभावेऽतिव्याप्तिपरिहाराय वाऽविद्यात्मनोः संबन्धनिरासार्थमुपादानत्वे सतीति भाष्यरत्नप्रभायाम् ४ निग्रहस्थाने तु परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थस्याबोधः॥ ३३॥

अणुत्वम्—सूक्ष्मपदार्थत्वे सत्यारम्भकत्वम्॥ ३४॥

अतिप्रसङ्गः—यस्य बोधो यत्राभिमतस्तदन्यस्यापि बोधप्रसङ्गः॥ ३६॥

अतिवादः—निरर्थकोऽतिप्रलापः॥ ३७॥

अतिव्याप्तिः–लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम्, यथा गोः श्रृङ्गित्वं लक्षणं लक्ष्यगोवृत्तित्वे सत्यलक्ष्यमहिष्यादिवृत्ति ॥३८॥ [ नस्तापः

अतिशयतापः–स्वाधिकतरदेवतोत्कर्षदर्शने जायमा-

अतीन्द्रियत्वम्–लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्मसमवाय्यन्यगुणत्वम्। ४०

अत्यन्तनिवृत्तिः–कारणसहितकार्यनिवृत्तिः १ * स्वप्रतियोगिजातीयप्रागभावासमानाधिकरणनिवृत्तिरिति तार्किकमते ॥ ४२ ॥

अत्यन्ताभावः–त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽभावः। ध्वंसप्रागभाववारणाय त्रैकालिकेति, भेदवारणाय संसर्गेत्यादि ॥ ४३ ॥

अदृष्टत्वम्-विधिनिषेधजन्यत्वे सत्यतीन्द्रियत्वम् ४४

अद्वैतत्वम्–सजातीयविजातीयस्वगतभेदशून्यत्वम्।

अधमत्वम्–भयदयालज्जाशून्यत्वम् १ * कामक्रीडाविषये कर्त्तव्याकर्त्तव्याविचारकत्वमिति रसमञ्जर्याम् ॥ ४७ ॥

अधर्मः—वेदादिनिषिद्धकर्मजन्यं पापम् १ बलवदनिष्टप्रयोजकत्वे सति वेदप्रमापितत्वमधर्मत्वम् २ वेदबोधितानिष्टसाधनताकत्वम् । विषभक्षणादिवारणाय वेदेति, ब्रह्मयागादेरपि वेदबोधित्वमस्तीति तद्वारणायानिष्टेत्यर्थसङ्ग्रहटीकायाम् ३ निषिद्धकर्मजन्यनरकजनकवृत्तिगुणत्वव्याप्यजातिमानिति तार्किकाः ॥९१॥ [ हेत्वादिकथनत्वम् ।

अधिकत्वम्—योग्यपरिमाणातिक्रमत्वम् १ * अधिक-

अधिकरणम्—साक्षात्परम्परया वा क्रियाश्रयः १ * वेदविचारात्मको न्यायः ३ विषयसंशयपूर्वपदसङ्गतिपूर्वपक्षसिद्धान्तनिर्णयात्मकपञ्चाङ्ग ( आधारत्वम् ४ ) बोधकवाक्यसमुदायो वा ५ विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्, निर्णय ( सङ्गति ) श्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥ ९९ ॥

अधिकारत्वम्—फलभोक्तृत्वे सति कर्मकर्तृत्वम् १ * उत्तरोत्तरसंबन्धत्वम् २ * यथेष्टं क्रयविक्रयादिक-

र्तृत्वसम्पादकस्वामित्वमिति धर्मशास्त्रज्ञाः ३ अनेकदेहारम्भकत्वे सति बलवत्प्रारब्धकर्मफलत्वम् ।

अधिकारविधिः—फलस्वाम्यबोधको विधिः१ सेतिकर्तव्यताकस्य करणस्य यागादेः फलसम्बन्धबोधको विधिर्वा यथा यजेत स्वर्गकामः ॥ ६९ ॥

अधिकारित्वम्—तत्तत्कर्मजन्यफलार्थित्वम् १ तत्तत्कर्मकरणयोग्यत्वं वा २ * द्विविधप्रयोजनप्राप्तिकामित्वमिति नैयायिकाः ३ अद्वैतमते तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसंपन्नो यः प्रमाता तत्त्वम् ४ मलविक्षेपरहितत्वे सति साधनचतुष्टयसम्पन्नत्वे सति स्वस्वरूपाज्ञानवत्त्वमिति ग्रं० ॥ ७० ॥

---

१ फलस्वाम्यं नाम कर्मजन्यफलभोक्तृत्वम् ।

अधिष्ठातृत्वम्—सन्निधानमात्रेण तत्तत्पदार्थानां तत्तत्कर्मसु नियन्तृत्वम् ॥ ७१ ॥

अधिष्ठानम्—यदाधारमारोप्यं भासते तत् १ सत्तास्फूर्त्तिप्रदातृ(न)त्वमधिष्ठानत्वम् २ सविलासाज्ञानविषयत्वमिति ग्रन्थान्तरे ॥ ७४ ॥

अध्ययनम्—अक्षरमात्र पाठ इति वैदिकाः १ सार्थाक्षरग्रहणमिति मीमांसकाः २ गुरुमुखतः शास्त्रार्थज्ञानम् ३ पूर्वगुरुमुखोच्चारणत्वे सत्युत्तरशिष्योच्चारणमिति वे० सिद्धान्तलेशे ॥ ७८ ॥

अध्यस्तत्वम्—सम्प्रयोगजन्यत्वे सति प्रत्यभिज्ञाभिन्नत्वे सति संस्कारजन्यत्वम्। स्मृतावतिव्याप्तिवारणाय संप्रयोगजन्यत्वे सतीति, प्रमायामतिव्याप्तिरतः संस्कारजन्यत्वमिति ॥ ७९ ॥

अध्यात्मत्वम्—आत्मानं देहेन्द्रियादिकं क्षेत्रज्ञं ब्रह्म वाऽधिकृत्य वर्तमानत्वम् ॥ ८० ॥

अध्मात्मशास्त्रम्—आत्मानमधिकृत्य प्रवृत्तं शास्त्रम्।

**अध्यारोपः**—वस्तुन्यवस्त्वारोपः, यथा शुक्तिकाशकलादौ रजतादेः। वस्तु चिदात्मा, तत्रावस्तुनः प्रपञ्चस्यारोपः ॥ ८२ ॥

**अध्यासः**—परत्र परावभासः १ स्वाभावाधिकरणेऽवभास इति ग्रन्था० २ अधिष्ठानविषमसत्ताकावभास इति **परिमलब्रह्मविद्याभरणयोः** ३ एकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववत्यवभासः। स्वात्यन्ताभाववत्यवभास एतावन्मात्रोक्तौ यत्र भूतलादौ घटोऽपसारितः पुनश्चानीतस्तादृशघटादावतिप्रसङ्गः स्यादिति **स्वसंसृज्यमान** इत्युक्तम्, एवमपि मूलावच्छेदेन कपिसंयोगात्यन्ताभाववति वृक्षे शाखाग्रावच्छेदेन च तत्संसृज्यमानेऽवभासमानत्वात्संयोगस्य तत्रातिप्रसङ्गः स्यादित्यत **एकावच्छेदेने**त्युक्तमिति **भाष्यरत्नप्रभायाम्** ४ दोष-

---

१ अवभासते इत्यवभास इति व्युत्पत्त्याऽवभासशब्दोऽर्थाध्यासपरः, अवभासतेऽर्थः (रजतादिः) अनेनेति व्युत्पत्त्या च ज्ञानाध्यासपरः।

जन्यत्वे सति संस्कारजन्यत्वम् ५ यद्वा अधिष्ठान-
सामान्यज्ञानजन्यत्वे सति दोषजन्यत्वमिति मता-
न्तरे ६ पारमार्थिकत्वावच्छिन्नस्वात्यन्ताभावाधि-
करणे प्रतीयमानत्वमिति वे०तत्त्वविवेके नृसिं-
हाश्रमाचार्याः ७ स द्विविधो ज्ञानाध्यासोऽर्थाध्या-
सश्च। यद्वा स्वरूपाध्यासः संसर्गाध्यासश्चेति
द्विविधोऽध्यासः। तत्राद्यो रज्ज्वादौ भुजङ्गाद्य-
ध्यास आत्मनि वाऽनात्माध्यासो द्वितीयस्तु
स्फटिके लौहित्यस्य शङ्खे च पीतिम्नोऽनात्मनि
चात्मतद्धर्मादेः, आत्मादेः पारमार्थिकत्वेन स्वरू-
पतोऽध्यासाभावात्। अथवा, प्रकारान्तरेण सोपा-
धिको निरूपाधिकश्चेति भेदादध्यासो द्विविधः।
द्विविधोऽप्यसौ बाह्याभ्यन्तरभेदात्पुनर्द्विविधः।
तत्र लोहितस्फटिकादिर्बाह्यः सोपाधिको भ्रमः,
जपाकुसुमादेरुपाधित्वात्। कर्तृत्वादिभ्रम आन्तरः,
कर्मरूपेण परिणताऽविद्यारूपोपाधिकार्यत्वात्।
शुक्तिरूप्यादिस्तु बाह्यो निरुपाधिको भ्रमः।

आकाशादिभ्रमोपि बाह्यो निरूपाधिकः। अहमज्ञो ब्रह्म न जानामीत्याद्याभ्यन्तरो निरुपाधिको भ्रमः इत्यादीनि बोद्धव्यानि। विस्तरस्तु गुरुमुखादेवावगन्तव्यः ॥ ९९ ॥

अध्याहारः–अश्रुतपदानुसन्धानम् १ आकाङ्क्षाविषयपदानुसन्धानं वा ॥ ९१ ॥

अनवस्था–पूर्वस्योत्तरोत्तरापेक्षितत्वम् १ अप्रमाणिकानन्तप्रवाहमूलकप्रसङ्गत्वमिति तार्किकाः २ उपपाद्योपपादकप्रवाहोऽनवधिः। चक्रकव्यावृत्त्यर्थमनवधिरिति, साकाङ्क्षतापरिहारायोपपाद्योपपादकेति मीमांसकमते ३ सा द्विविधा–अधो धावन्ती, ऊर्द्ध्वधावन्ती चेति। तत्राऽधो धावन्ती यथा घटजनने कपालाऽपेक्षा कपालजनने कपालिकायास्तज्जनने च तदवयवानामपेक्षा एवं तत्र तत्रेति। ऊर्द्ध्व धावन्त्यनवस्था यथा 'भेदः किं भिन्ने धर्मिणि

---

१ अनवधिककार्यकारणप्रवाहापत्तिरित्यर्थः।

वर्ततेऽभिन्ने वा आद्योपि केन भेदेन भिन्ने कस्य भेदस्याऽवस्थितिः ?' इतिप्रश्ने 'द्वितीयभेदभिन्ने धर्मिणि प्रथमस्य, तृतीयभेदभिन्ने द्वितीयस्य, चतुर्थभेदभिन्ने तृतीयस्य, एवं तत्र तत्रापि' इत्यङ्गीकारे। अनवस्थाऽङ्गीकारे प्रागलोपविनिगमनाविरहप्रमाणाभावदोषत्रयं भवति ९४ [धादि

**अनिच्छाप्रारब्धम्**—अकस्माज्जायमानं कण्टकवे-

**अनित्यत्वम्**—ध्वंसप्रागभावान्यतरप्रतियोगित्वमिति नैयायिकाः १ ध्वंसप्रतियोगिवृत्तिविशिष्टसत्तायोगित्वमिति **गौडब्रह्मानन्दाः** ॥ ९७ ॥

**अनिर्वचनीयख्यातिः**—सदसदादिप्रकारैरनिर्वाच्यस्यैवाध्यस्तपदार्थस्य भानम् ॥ ९८ ॥

**अनिर्वचनीयत्वम्**—सदसद्विलक्षणत्वम् १ प्रकारत्रयप्रतियोगिकाभावत्रयवत्त्वमिति **चित्सुख्याम्** २ सदन्यत्वे सत्यसदन्यत्वे सत्युभयात्मकान्यत्वम् ३ सत्त्वरहितत्वे सत्यसत्त्वरहितत्वे सति सदसत्त्वरहितत्वं वा ४ सत्त्वासत्त्वाभ्यां विचारासहिष्णुत्वे सति

सदसत्त्वेन विचारासहिष्णुत्वमित्यद्वैतसिद्धौ ९ सत्त्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वे सति सद-सत्त्वानधिकरणत्वमिति न्यायमकरन्दटीकायाम् ।

अनुकूलत्वम्—स्वपक्षपातित्वम् १ * कार्यसहकारि-कारणत्वम् ॥ १०८ ॥

अनुक्रमः—यस्योत्तरं यस्य पाठकरणम् ॥ १०९ ॥

अनुगतत्वम्—एकत्वे सत्यनेकवृत्तित्वम् ॥ ११० ॥

अनुग्रहः—दुःखिनो दुःखापाकरणे प्रवृत्तिः १ अनि-ष्टनिवारणपूर्वकेष्टसाधनेच्छेति ग्रं० ॥ ११२ ॥

अनुचिन्तनम्—श्रुतार्थविषयकयुक्तायुक्तत्वादिसंशा-यनिवर्तकयुक्त्यनुसन्धानम् ॥ ११३ ॥

अनुद्भूतत्वम्- अतीन्द्रियविशेषगुणत्वम् ॥ ११९ ॥

अनुपलब्धिप्रमाणम्—योग्यत्वे सत्यनुपलम्भोऽभाव-प्रमाकरणम् । अयोग्यभूतललग्नसलिलानुपलम्भ-निरासाय योग्येति, योग्यस्योपलम्भनिरासायानुप-लम्भेति १ ज्ञानकरणाऽजन्याभावानुभवासाधार-णकारणम् । अदृष्टादौ साधारणकारणेऽतिव्याप्ति-

वारणायासाधारणेति, ज्ञानकरणाजन्यघटादिभाव-
पदार्थप्रत्यक्षानुभवासाधारणकारणे चक्षुरादावति-
व्याप्तिवारणायाभावेति, अभावस्मृतिहेतौ संस्का-
रेऽतिव्याप्तिवारणायानुभवेति, अयं विद्याफलक-
धर्माभाववान् मूर्खत्वादित्याद्यतीन्द्रियाभावानुभव-
हेतावनुमानादावतिव्याप्तिवारणायाजन्यान्तविशे-
षणमिति धर्मराजेन २ ज्ञानाकरणकाभावानुभव-
करणत्वमनुपलब्धिप्रमाणत्वमिति चूडामणौ ११८

**अनुपादेयम्**—स्वकृतिसाध्यत्वविरहः ॥ ११९ ॥

**अनुपूर्वत्वम्**—पूर्वमनुक्रम्यत्वम् ॥ १२० ॥

**अनुबन्धः**-मङ्गलाचरणाव्यवहितोत्तरमेव ग्रन्थादाव-
नुबद्ध्यमानः १ यद्वा स्वविषयकज्ञानद्वारा शास्त्रे
प्रवर्तकः २ सर्वेषामेव शास्त्राणामनुबन्धचतुष्टयम्,
पृथक् पृथक् भवत्येतज्ज्ञातं शास्त्रे प्रवर्तकम् १२२

**अनुभवः**—स्मृतिभिन्नज्ञानम् । घटादावतिव्याप्तिवार-
णाय ज्ञानम्, स्मृतिवारणाय स्मृतिभिन्नेति ।

**अनुभूतत्वम्**—अनुभवविषयीभूतत्वम् ॥ १२४ ॥

**अनुभूयमानारोपः**—प्रत्यक्षानुभवविषयारोपः १२९

**अनुमानप्रमाणम्**—अनुमितिप्रमाकरणम्। कुठारादावतिव्याप्तिवारणायानुमितीति, प्रत्यक्षादावतिव्याप्तिवारणायान्वितिति १ अपरे तु स्वजन्यव्यापारवत्तासम्बन्धेनानुमितेरसाधारणकारणत्वम् २ ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टार्थे बुद्धिरिति **शाबरभाष्ये** ३ 'यदर्थदृगर्थदर्शनं तदि'ति वैभाषिकाणां सूत्रकृतो दिङ्नागस्य **सूत्रम्** ४ अनुमीयतेऽनेनेति ॥ १३० ॥

**अनुमितिः**—व्याप्तिज्ञानकरणं ज्ञानम् १ परामर्शजन्यं ज्ञानं वा, प्रत्यक्षादावतिव्याप्तिवारणाय **परामर्शजन्यमिति**, परामर्शध्वंसवारणाय ज्ञानमिति न्या० २ लिङ्गज्ञानजन्यं ज्ञानम् ३ व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्यं वा ४ व्याप्यज्ञानाद्व्यापकज्ञानं वा ५ व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानं वा ६ साधनधर्मदर्शनात्साध्यधर्मविशिष्टे बुद्धिर्वा ७ लिङ्गलिङ्गिपूर्वकं स्वज्ञानद्वारा हेतुपक्षजन्यसाध्यज्ञान

मिति साङ्ख्याः ८ सा द्विविधा स्वार्था परार्था चेति लक्षणं तत्तच्छब्दे द्रष्टव्यम् ॥ १३८ ॥

**अनुयोगी**–यस्मिन्नभावः संबन्धः सादृश्यं वास्ति सः३ विशिष्टप्रतीतिविषयविशेष्यत्वमनुयोगित्वम् ॥१४२

**अनुवादः**–उक्तस्य पुनर्वचनम्, यथा "जुहोति जुहोती"त्यादिः १ प्रमाणान्तर(प्राप्तार्थ.)अवगतार्थबोधकः, यथा "अग्निर्हिमस्य भेषजमि"ति मी० २ मानन्तरेण निर्णीतार्थज्ञापकः शब्द इति न्या० ॥ १४९ ॥

**अनुवृत्तिः**–पठितस्य पुनः पठनम् १ * दवीयस्स्थानान्तरस्थितस्यानुसन्धानमिति दिनकर्याम् १४८

**अनुव्यवसायत्वम्**–ज्ञानविषयकज्ञानत्वम् ॥१४९॥

**अनुषङ्गः**—एकत्रान्वितपदस्यान्यत्रान्वयः १ वाक्यान्तरे जनितान्वयबोधपदस्य वाक्यान्तरेऽन्वयार्था(भिसं.)नुसन्धानं वा २ नेदीयस्थानान्तरस्थितस्यानुसन्धानमिति दिनकर्याम् ३ * अन्योद्देशेन प्रवृत्तस्य तन्नान्तरीयकविषयान्यासिद्धिः ॥१९३॥

अनुष्ठानत्वम्—विहितकर्मादिकरणत्वम् ॥ १५४ ॥
अनेकत्वम्—अपेक्षाबोधविषयत्वम् ॥ १५५ ॥
अनैकान्तिकः—विरुद्धान्यपक्षवृत्तित्वे सत्यनुमिति-
विरोधिसम्बन्धाव्यावृत्तः ॥ १५६ ॥
अन्तःकरणम्—सर्वज्ञानादिप्रत्यक्षकरणम् १ शरी-
रान्तःस्थत्वे सतीन्द्रियसहायकत्वमन्तःकरणत्वम् २
यद्वा ज्ञानशक्तिप्रधानत्वे सति मिलितसमस्तापञ्ची-
कृतपञ्चमहाभूतसात्त्विकांशकार्यत्वम् ॥ १५९ ॥
अन्तःकरणशुद्धत्वम् —परवञ्चनमायानृतादिपरिवर्ज-
(र्जि)नत्वम् ॥ १६० ॥
अन्त्यावयवित्वम्—द्रव्यानारम्भकत्वे सति कार्यद्रव्य-
त्वम् १ अवयवजन्यत्वे सत्यवयव्यजनकत्वं वा १६३
अन्धः-श्रुतिस्मृती च विप्राणां चक्षुषी देवनिर्मिते,
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः १६४

---

१ परवञ्चनत्वम्—परस्य व्याजेन वशीकरणत्वम् ।
२ अनृतत्वम्—अयथादृष्टकरणत्वम् ।

**अन्धकारत्वम्**—भयदृष्टितेजोऽवरोधकारित्वम् १६९

**अन्धतामिस्रः** }
**अभिनिवेशः**— } अणिमादिगुणसम्पत्तौ दृष्टानुश्रविक-विषयप्रत्युपस्थाने च कल्पान्ते सर्व-मेतन्नङ्क्ष्यतीति यत्त्रासः १६६। [स्थूलशरीरम्

**अन्नमयकोशः**—मातृपितृभुक्तान्नजशुक्रशोणितकार्यं

**अन्यतमः**—अनेकमध्ये निर्द्धारितैक इति व्याकरणे १ न्यायमते तु अनेकभेदावच्छिन्नप्रतियोगिताक-भेदः २ स्वेतरयावत्प्रतियोगिभेदवत्त्वमन्यतमत्वम् ३ तद्भिन्नत्वे सति तद्भिन्नत्वे सति तद्भिन्नभिन्न-त्वम्, यथा घटपटगृहान्यतम इत्यादिः ॥१७१॥

**अन्यतरः**—द्वयोर्मध्ये निर्द्धारितैक इति व्याकरणे १ न्यायमते द्वयावच्छिन्नप्रतियोगिकभेदः २ भेदद्वया-भाववत्त्वमन्यतरत्वम् ३ एतद्भिन्नत्वे सत्येतद्भिन्नो यस्तद्भिन्नत्वमिति पुस्तकान्तरे ४ तद्भिन्नत्वे सति तद्भिन्नभिन्नत्वमिति ग्रं० ॥ १७६ ॥

**अन्यतरकर्मजसंयोगः**—क्रियाऽभाववत्समवेतत्वे सति क्रियावत्समवेतसंयोगः ॥ १७७ ॥

**अन्यथाख्यातिः**—अन्याकारज्ञानस्यालम्बनम् । तदभाववति तत्प्रकारकभानं वेति भाट्टवैशेषिकमतयोः।
**अन्यथानुपपत्तिः**—स्वाभावप्रयोज्यासम्भवः।१८०।
**अन्यथासिद्धत्वम्**—कारणसामग्रीबाह्यत्वम्॥१८१॥
**अन्यथासिद्धित्वम्**—कार्याव्यवहितपूर्ववर्त्तित्वे सति कार्यानुत्पादकत्वम् ॥ १८२ ॥
**अन्यथैवोपपत्तिः**—वैपरीत्येनोपपत्तिसाम्यम्।१८३।
**अन्योन्याध्यासः**—अन्योन्यस्मिन् अन्योन्यतादात्म्यस्याध्यासः ॥ १८४ ॥
**अन्योन्याभावः**—तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोभावः । प्रागभावप्रध्वंसाभाववारणाय तादात्म्येति । अत्यन्ताभावव्यतिरिक्तत्वे सत्यनवधिरभाव इति **सर्वदर्शनसङ्ग्रहे** ॥ १८६ ॥
**अन्योन्याश्रयत्वम्**—अन्योन्यस्याऽव्यवहिताऽन्योन्यापेक्षितत्वम् । आत्माश्रयव्यावर्तनायान्योन्यस्येति । स्वापेक्षापेक्षितत्वनिबन्धनप्रसङ्गत्वमिति

न्या० २ स्वग्रहसापेक्षग्रहसापेक्षग्रहकत्वम्, यथा महिषभिन्नत्वं गोत्वं गोभिन्नत्वं च महिषत्वमित्येवं लक्षणे, गोत्वज्ञानाय महिषत्वज्ञानापेक्षा, महिषत्वज्ञानाय च गोत्वज्ञानापेक्षेति वेदान्तमते ३ स्वज्ञप्त्यधीनज्ञप्तिकत्वमिति केचित् ॥ १९० ॥

**अन्वयः**—परस्परमर्थागमः १ स्वसत्तानियतसत्तावत्कार्यसंबन्धो वा २ यत्सत्त्वे यत्सत्त्वमिति ग्रं० ।

**अन्वयव्यभिचारः**—कारणसत्त्वे कार्याभावः १ स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगिकार्यकत्वमन्वयव्यभिचारत्वम् २ स्वेतरयावत्कारणाधिकरणस्वाधि०

**अन्वयव्याप्तिः**-हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम् ॥ १९७ ॥

**अन्वयसहचारः**—कारणसत्त्वे कार्यसत्त्वम् ॥ १९८ ॥

---

१ स्वग्रहः स्वज्ञानम् तस्य सापेक्षोऽपेक्षाकारी यो ग्रहस्तस्य सापेक्षोऽपेक्षाकारी ग्रहो ज्ञानं यस्य तस्य भावस्तत्त्वमित्यर्थः ।

अपभ्रंशः—साधुशब्दस्य शक्तिवैफल्यप्रयुक्तान्यथोच्चारणयुक्तोऽपशब्दः ॥ २०० ॥

अपञ्चीकरणम्—स्वेतरभूतचतुष्टयामिश्रीकरणम् ।

अपरत्वम्—अपरव्यवहारासाधारणकारणम्॥२०२॥

अपरसामान्यत्वम् न्यूनदेशवृत्तित्वम् ॥ २०३ ॥

अपरवैराग्यम्—ब्रह्मज्ञानान्यविषयवैतृष्ण्यम् । तच्च यतमानव्यतिरेकैकेन्द्रियवशीकारभेदेन चतुर्विधं लक्षणं तत्तच्छब्दे द्रष्टव्यम् ॥ २०४ ॥

अपराधत्वम्—दण्डयोग्यकर्मकरणत्वम् १ स्वोचितकर्माकरणत्वं वा २ अपरे तु शास्त्रविध्युल्लङ्घनत्वे सति निषिद्धसेवनजातदुरितविशेषत्वम् ॥२०७॥

अपरिग्रहः—समाध्यनुष्ठानानुपयुक्तस्य वस्तुमात्रस्यासङ्ग्रहः १ देहयात्रानिर्वाहकातिरिक्तभोगसाधना(धनं.)नामनङ्गीकारः ॥ २०९ ॥

---

१ अर्जनरक्षणक्षयसङ्गहिंसारूपदोषदर्शनादस्वीकरणमित्यर्थः ।

**अपरोक्षज्ञानम्**—विषयचित्तादात्म्यापन्नं प्रमाणचैतन्यम् १ अनधिगताबाधितवर्तमानयोग्यविषयचैतन्याभिन्नं प्रमाणचैतन्यं वा प्रत्यक्षप्रमाऽपरपर्यायः। अधिगतार्थविषयकयथार्थस्मृतावतिप्रसङ्गवारणार्थमनधिगतेति विषयविशेषणम्, भ्रमज्ञानेऽतिप्रसङ्गवारणार्थमबाधितेति, धर्माधर्मयोः प्रत्यक्षवारणाय योग्येति च विषयविशेषणम् ॥ २११ ॥

**अपवादः**—अधिष्ठाने भ्रान्त्या प्रतीतस्याधिष्ठानव्यतिरेकेणाभावनिश्चयः, यथा शुक्त्यादौ भ्रान्त्या प्रतीतस्य रजतादेः शुक्तिव्यतिरेकेण नेदं रजतं किन्तु शुक्तिरित्यभावनिश्चयः १ अध्यारोपितस्याधिष्ठानमात्रपर्यवशेषणमयमेव बाधो विज्ञापनश्चोच्यते इति ग्रन्थातरे ॥ २१३ ॥

**अपसिद्धान्तनिग्रहस्थानम्**—एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम् ॥ २१४ ॥

**अपूर्वम्**—वैधनिषिद्धक्रियाजन्ययोः कालान्तरभाविनोः सुखदुःखयोर्हेतुभूतं पुण्यपापम् ॥ २१६ ॥

**अपूर्वता**—प्रकरणप्रतिपाद्यस्य मानान्तराऽविषयता, यथा "तन्त्वौपनिषदं पुरुषं पृच्छामी"त्यद्वितीयवस्तुन उपनिषदतिरिक्तमानाविषयता ॥ २१७ ॥

**अपूर्वविधिः**—प्रमाणान्तरेणात्यन्ताऽप्राप्तार्थविधायको विधिः यथा "व्रीहीन्प्रोक्षती"ति व्रीहिप्रोक्षणविधिः। नियमादिविधावतिव्याप्तिवारणाय **प्रमाणेति**।

**अपेक्षा**—कार्यनिमित्तयोरन्योन्याभिसम्बन्ध इति सुपद्मटीकायां विष्णुमिश्रः ॥ २१९ ॥

**अपेक्षाबुद्धिः**—विनाशकविनाशप्रतियोगिनी बुद्धिः १ अनेकैकत्वविषयिणी बुद्धिर्वा ॥ २२१ ॥

**अपोहः**—शिष्यस्य मिथ्याग्रहणापाकरणसामर्थ्यम् १ यद्वा सिद्धान्तप्रतिपक्षनिराकरणसामर्थ्यमित्युपदेशसाहस्रीयटीकायां रामतीर्थः ॥ २२३ ॥

**अपौरुषेयत्वम्**—वाक्यार्थज्ञानापेक्षोच्चारणकमात्रवृत्त्यानुपूर्वीशून्यत्वम् १ सजातीयोच्चारणानपेक्षोच्चा-

रणकवृत्त्यानुपूर्वीरहितत्वं वा २ मतान्तरे तु स्वानुपजीविप्रमाणजन्यसमानप्रकारविशेष्यकोच्चारणसापेक्षोच्चारणविषयत्वम् ३ पूर्वकल्पीयानुपूर्वीसमानानुपूर्वीघटितत्वमिति वेदान्तमते ४ जैमिनीयास्तु स्वसजातीयोच्चारणसापेक्षोच्चारणसामान्यकत्वम् ५ यद्वा अविच्छिन्नव्यवहारत्वे सम्प्रदायाविच्छेदत्वे वा सत्यस्मर्यमाणकर्तृकत्वम्। अज्ञातकर्तृके जीर्णकूपारामादौ व्यभिचारवारणाय सम्प्रदायाविच्छेदत्वे सतीति, भारतादिषु व्यभिचारपरिहारायास्मर्यमाणकर्तृकत्वमिति ॥ २३० ॥

**अप्रतिभानिग्रहस्थानम्**—उत्तरार्हे परोक्तं बुद्ध्वाप्युत्तरस्यास्फूर्तिवशात्तूष्णीम्भावः ॥ २३१ ॥

**अप्रमा**—प्रमाभिन्नं ज्ञानम्। प्रमावारणाय भिन्नेति, घटादिवारणाय ज्ञानेति ॥ २३२ ॥

**अप्रमात्वम्**— } **अप्रामाण्यम्** } दोषसहकृतज्ञानसामग्रीजन्यत्वम् १ तदभाववति तत्प्रकारकत्वम् ॥२३४॥

**अबाध्यत्वम्**—त्रैकालिकनिषेधाप्रतियोगित्वम् २३५

**अभानापादकावरणम्**–(कूटस्थो) न भातीत्याकारकाभानापादनप्रयोजकीभूतमावरणम् ॥ २३६ ॥

**अभावः**–निषेधमुखप्रतीतिविषयः १ प्रतियोगिसापेक्षप्रतीतिविषयो वा २ प्रतियोगिनिरूपणाधीननिरूपणको वा ३ आदर्शे तु नञ्शब्दोल्लेखिप्रतीतिविषयः ४ प्रतियोग्यारोपितसंसर्गजन्यप्रतीतिविषयः ५ अन्ये तु सम्बन्धसादृश्यभिन्नत्वे सति प्रतियोगिज्ञानाधीनज्ञानविषयः ॥ २४२ ॥

**अभावप्रमा**–योग्यानुपलब्धिकरणिका प्रमा, यथा घटाद्यनुपलब्ध्या घटाभावप्रमा भूतले जायते २४३

**अभिचारः**–मारणोच्चाटनादिफलकतान्त्रिकप्रयोगविशेष इति तन्त्रसारे ॥ २४४ ॥

**अभिज्ञाप्रत्यक्षम्**–इदन्तामात्रावगाहिज्ञानम् १ योगमञ्जर्यां तु विषयसंबद्धेन्द्रियजन्यं ज्ञानम्, यथाऽयं घटोऽयं पट इत्यादि ॥ २४६ ॥

**अभिधानत्वम्**–अन्वयबोधफलकशब्दप्रयोगत्वम् ।

**अभिधानानुपपत्तिः**—अनुपपद्यमानवाक्यैकदेशश्रवणात्तदुपपादकीभूतार्थान्तरकल्पनम्, यथा 'द्वारमि' त्यस्य वाक्यैकदेशस्य 'पिधेही'ति पदार्थान्तरकल्पनमन्तरानुपपत्त्या तत्कल्पनम् ॥ २४८ ॥

**अभिधेयः**—शास्त्रजप्रमानिवर्त्याज्ञानगोचरः ।२४९।

**अभिधेयविधिः**—कृतिसाध्यत्वे सतीष्टसाधनत्वम् ।

**अभिनिवेशः**—आयुरभावेऽप्येतैः शरीरेन्द्रियादिभिरनित्यैरपि वियोगो मे माभूदित्याविद्वदङ्गनाबालं स्वाभाविकः सर्वप्राणिसाधारणो मरणत्रासः १ स्वीकृतस्य पुनस्त्यागाऽसहिष्णुत्वमिति ग्रं०॥२९२॥

**अभिन्नत्वम्**—भेदानधिकरणत्वम् ॥ २९३ ॥

**अभिन्ननिमित्तोपादानम्**—निमित्तञ्च तदुपादानं चेति निमित्तोपादानम्, अभिन्नञ्च तन्निमित्तोपादानं चेति कर्मधारयः ॥ २९४ ॥

**अभिभवः**—बलवत्सजातीय (ग्रहणकृतमग्रहणम् १) सम्बन्धकृतमग्रहणम् ॥ २९६ ॥

अभिमानत्वम्—आत्मन्युत्कर्षारोपत्वम् ॥ २५७ ॥

अभिलाषः—इष्टविषयकतृष्णा ॥ २५८ ॥

अभिवादनम्—नामोच्चारणपूर्वकनमस्कारः १ पाद-स्पर्शपूर्वकनमस्कारो वा ॥ २६० ॥

अभिव्यक्तिः—सूक्ष्मरूपेण स्थितस्य कारणस्य कार्यरूपेणाविर्भावः १ * कार्यस्यास्ति प्रकाशत इति व्यवहारः ॥ २६२ ॥

अभिव्यञ्जकत्वम्—अस्तिव्यवहारजनकत्वम् २६३

अभिहितानुपपत्तिः—अनुपपद्यमानसमग्रवाक्यश्रवणात्तदुपपादकीभूतार्थान्तरकल्पनम्, यथा तरति-शोकमात्मविदिति प्रमातृत्वादिबन्धस्य शोकोपलक्षितस्य ज्ञाननिवर्त्यत्वश्रवणाच्छोकस्य मिथ्यात्वमन्तरानुपपद्यमानाच्छोकस्य मिथ्यात्वकल्पनं यथा वा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि वाक्यश्रवणाददृष्टस्य प्रकल्पनमित्यादर्शे ॥२६४॥

अभ्यागतत्वम्—भिन्नस्थानीयत्वे सति स्वस्थानागतत्वम् ॥ २६६ ॥

**अभ्यासः**–पुनः पुनरनुशीलनम् १ उत्साहरूपप्रयत्नस्य पुनः पुनरनुष्ठानत्वमभ्यासत्वम् २ * प्रकरणप्रतिपाद्यस्य पुनः पुनः प्रतिपादनम्, यथा तत्त्वमसीति नवकृत्वोऽभ्यासः २६९। [करणम्

**अभ्युपगमवादः**-वादिबलनिरीक्षणार्थमनिष्टमपि स्वी-

**अयथार्थानुभवः**–दुष्टसामग्रीजन्यं ज्ञानम् १ बाधितार्थविषयानुभवो वा, यथा शुक्ताविदं रजतमिति ज्ञानम्। प्रमायामतिव्याप्तिवारणायाद्यविशेषणम्, अयथार्थस्मृतावतिव्याप्तिवारणाय द्वितीयम् २७२

**अयुतसिद्धिः**–असम्बद्धयोरविद्यमानत्वम्॥२७३॥

**अयोनिजशरीरम्**–शुक्रशोणितसन्निपातानपेक्षम्। तत् स्वेदजोद्भिज्जदेवनारकिकादिकम्॥ २७४ ॥

**अरणिः**–घर्षणद्वाराग्निजनककाष्ठम्॥ २७५ ॥

**अरिः**–स्वकृतापकारमनपेक्ष्य स्वभावक्रौर्येणापकर्त्ता

**अर्थः**–एकैकेन्द्रियमात्रग्राह्यविशेषगुणः १ अर्थ्यते प्रार्थ्यते प्राणिभिरिति वित्तादिः॥ २७८ ॥

**अर्थवादः**–विध्यसमभिव्याहृतवाक्यम् १ प्राशस्त्यनिन्दान्यतरपरं वाक्यं वा २ * प्रकरणप्रतिपाद्यस्य प्रशंसनम्, यथा''येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि''त्यद्वितीयवस्तुप्रशंसनम् ३ स त्रिविधः गुणवादोऽनुवादो [२२पृष्ठे] भूतार्थवादश्चेति ल० तत्तच्छब्दे द्र० ॥ २८१ ॥

**अर्थव्यसनम्**
**वासना** } शास्त्रतात्पर्याग्रहणेन समग्रावस्थाशास्त्रार्थासक्तिः ॥ २८२ ॥

**अर्थाध्यासः**–अज्ञातगोचरवृत्त्यनुपहितत्वे सति पूर्वदृष्टत्वानधिकरणम् १ प्रमाणाजन्यज्ञानविषयत्वे सति पूर्वदृष्टसजातीयो वा, यथा शुक्तौ रजताध्यास आत्मनि चानात्माध्यासः। स्मर्यमाणगङ्गादौ अभिनवघटे चातिव्याप्तिनिरासाय **प्रमाणे**त्यादिपदद्वयम् ॥ २८४ ॥

**अर्थान्तरनिग्रहस्थानम्**–प्रकृतानुपयुक्तार्थकथनम्।

**अर्थापत्तिप्रमा**–अन्यथानुपपन्नदर्शनादुपपादके बुद्धिः १ ग्रन्थान्तरे तु सम्पाद्यज्ञानप्रभवं सम्पादक-

ज्ञानम् २ अनुपपद्यमानार्थज्ञानात्तदुपपादकीभूतार्थान्तरकल्पनम्, यथा दिवाऽभुञ्जानस्य देवदत्तस्य रात्रिभोजनं विनाऽनुपपद्यमानपीनत्वज्ञानात्तदुपपादकरात्रिभोजनकल्पनमित्यद्वैतकौस्तुभे ३ उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः। अर्थस्य पदार्थविशेषस्य आपत्तिर्ज्ञानमिति तत्पुरुषसमासेनार्थापत्तिशब्दः प्रमापरः, अर्थस्यापत्तिर्यस्मादिति बहुव्रीहिणा प्रमाणपरोपीत्यर्थापत्तिशब्दः प्रमाप्रमाणोभयपरः, प्रत्यक्षशब्दवत् ४ सा द्विविधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति ल०त०श०द्र० २८९।

**अर्थापत्तिप्रमाणम्**—(संपा०)उपपादकप्रमाकरणम् १ यद्वा उपपादककल्पनाहेतुभूतोपपाद्यज्ञानम्।२९१।

**अर्पणम्**—स्वत्वत्यागानुकूलव्यापारः ॥ २९२ ॥

---

१ उपपाद्यः—योऽर्थोऽन्येन केनचित्कल्पनीयेन विना नोपपद्यते सोऽर्थः। २ उपपादकः—यस्य कल्पनीयार्थस्याभावे सत्युपपाद्यं नोपपद्यते स कल्पनीयोऽर्थः।

अलङ्कारत्वम्—शब्दार्थयोः शोभाकारित्वम् १ रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वमिति कुवलयानन्दटीकायाम्।

अलीकत्वम्—तादृशप्रतियोगिताविशिष्टत्वे सत्यप्रतीयमानत्वम् १ सर्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वे सति सत्तादात्म्यशून्यत्वमिति ग्रं० २९६

अलोलुपत्वम्—विषयसंनिधाने सति इन्द्रियाणामविक्रियत्वम् ॥ २९७ ॥

अलौकिकः—विधिमन्तरा रागादिप्राप्तिभिन्नः २९८

अल्पत्वम्—यस्य वस्तुनः यावती इयत्ता उचिता ततो न्यूनत्वम् ॥ २९९ ॥

अवकाशः—अवस्थितियोग्यतासंपादकोऽवसरः ३००

अवघातः—व्रीहिसंस्कारार्थव्यापारः ॥ ३०१ ॥

अवच्छेदः—विशेषणोपाधिना विशेषकरणम् ।३०२।

अवच्छेदकत्वम्—अनतिरिक्तदेशवृत्तित्वम् १ अव-

च्छित्त्यन्यूनानतिरिक्तकालीनविशेष्यसम्बन्धवत्त्व-
मिति मतान्तरे ॥ ३०४ ॥

**अवतरणिका**-ग्रन्थप्रस्तावार्थं प्रथममुपोद्घातः ३०५

**अवतारः**—देवानामंशावेशवशेन प्रादुर्भावः १ उत्कृ-
ष्टावस्थात्यागित्वे सति निकृष्टावस्थाग्रहणमिति
ग्रं० २ स्वादृष्टारचितत्त्वे सत्यभौतिकशरीरत्वे सति
साध्वसाधुसुखदुःखहेतुत्वमित्यन्यः ॥ ३०८ ॥

**अवधित्वम्**—स्वाभिधेयापेक्षया विभागाश्रयत्वम् ।

**अवयवः**—समुदायस्यांशरूपः १ अवच्छिन्नपरिमा-
णवत्त्वमवयवत्वम् २ * द्रव्यसमवायिकारणम् ३
द्रव्यारम्भकद्रव्यत्वमिति पु० ४ * साधनवत्ता-
प्रयुक्तसाध्यवत्तानुभावकः ५ तृतीयलिङ्गपरामर्श-
प्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यमि-
ति पु०३१६ [ न्यद्रव्यत्वं वा ३१८

**अवयवित्वम्**—जन्य(कार्य)द्रव्यत्वम् १ अवयवज-

**अवसरसङ्गतिः**—प्रतिबन्धकीभूतशिष्यजिज्ञासानि-
वृत्त्याऽनन्तरवक्तव्यत्वम् ॥ ३१९ ॥

अवस्था—कालादिकृतपरिणामान्तरदेहादेर्दशा । सा षड्विधा—आदन्तजननात् शिशुत्वम् १ पञ्चवर्षान्तं कौमारम् २ दशवर्षान्तं बाल्यम् ३ आपञ्चदशाब्दात्कैशोरम् ४ षोडशाब्दात्परं यौवनम् ५ षष्टिवर्षात्परं वृद्धत्वम् ॥ ३२० ॥

अवस्थाऽज्ञानत्वम्—घटाद्यवच्छिन्नचैतन्यावरकत्वम् ।

अवान्तरत्वम्—प्रधानान्तःपातित्वम् ॥ ३२२ ॥

अवान्तरतात्पर्यत्वम्—मुख्यतात्पर्यविषयसिद्धावुपायभूतार्थे तात्पर्यत्वम् ॥ ३२३ ॥

अवान्तरप्रलयः—कार्यद्रव्यानधिकरणकार्याधिकरणकालः ॥ ३२४ ॥

अवान्तरवाक्यत्वम्—तत्त्वंपदार्थान्यतरबोधकवाक्यत्वम् ३२५

अवाप्तिः—स्वाधीनोच्चारणक्षम(=योग्य)त्वम् ३२६

अविगीतत्वम्—बलवदनिष्टाननुबन्धित्वम् ॥३२७॥

अविद्या—रजस्तमोऽभिभूतमलिनसत्त्वप्रधाना १ स्वाश्रयव्यामोहकरीति पक्षान्तरे २ अधिकं त्वज्ञानशब्दे ९ पृष्ठे द्रष्टव्यम् ॥ ३२९ ॥

अविद्यावृत्तिः—साक्षादविद्योपादाना वृत्तिः॥३३०॥
अविनाभावः-व्याप्यनिष्ठव्यापकनिरूपितधर्मः३३१
अवीताशेषवदनुमानम्—निषेधमुखेन प्रवर्त्तमानं सन्निषेधकम्
अव्यभिचरितत्वम्—साधनसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् ॥ ३३३ ॥
अव्ययः—न विद्यते व्ययो विनाशो धर्मतः स्वरूपतोऽवयवतो यस्य सः ॥ ३३४ ॥
अव्यवहितत्वम्—व्यवधानाभाववत्त्वम् ॥ ३३६ ॥
अव्याप्तिः—लक्ष्यैकदेशावृत्तित्वम्, यथा गोः कपिलत्वं लक्षणं श्वेतगवादौ लक्ष्यैकदेशेऽवृत्ति १ लक्ष्यवृत्तित्वे सति लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वमिति न्या० ॥ ३३८ ॥
अव्याप्यत्वम्—व्याप्याभाववद्वृत्तित्वम् ॥ ३३९ ॥
अव्याप्यवृत्तित्वम्—स्वात्यन्ताभावसमानाधिकरणत्वम् १ स्वसमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वम् २ कादाचित्कत्वे सति एकदेशवृत्तित्वमिति पु० ॥ ३४२ ॥

अव्युत्पन्नत्वम्—पदज्ञानरहितत्वम् ॥ ३४३ ॥

अशुचित्वम्—वैदिककर्मानर्हत्वप्रयोजकोधर्मविशेषः।

अशुद्धत्वम्—व्याकरणादिलक्षणाननुसारित्वम् १ *
शास्त्रनिषिद्धानुष्ठानवत्त्वम् ॥ ३४६ ॥

अशुद्धिः—कर्तृद्रव्यादेः स्पर्शनाद्यनर्हतापादको दोष-
विशेष इति हेमाद्रौ ॥ ३४७ ॥

अशुभ/अशुद्ध वासना—निषिद्धनिषिद्धसमविद्याकर्मतत्संस्कार-
तत्फलसंस्काररूपा । निषिद्धा विद्या स्त्रीचिन्त-
नादिरूपा, निषिद्धसमा यदृच्छया काकविडाद्य-
वेक्षणात्मिका, निषिद्धं कर्म पलाण्डुभक्षणादि,
निषिद्धसमं तृणच्छेदनादि, एतेषां चतुर्णां संस्का-
रास्तथैतेषां ततोऽपि पूर्वजन्मकृतानां यानि जन्मा-
न्तरे फलानि नरकादीनां संस्कारा इत्यशुभवास-
नोदाहरणानि ॥ ३४८ ॥

अशौचम्—विहितकर्मानधिकारित्वसम्पादकत्वम्।

अश्रद्धा—गुरुशास्त्रोपदिष्टेऽर्थे इदमेवं न भवत्येवेति
विपर्ययबुद्धिः ॥ ३५० ॥

असत्ख्यातिः—असतः(=शून्यस्य) एवाध्यस्तपदा-र्थाकारेण भानम् ॥ ३९१ ॥

असत्यत्वम्—वस्तुस्वभावविरोधिधर्मत्वम् ॥३९२॥

असत्त्वम्—सर्वदेशकालसम्बन्धिनिषेधप्रतियोगित्व-मिति वे०सि०लेशे १ क्वचिदप्यधिकरणे सत्त्वेना-प्रतीयमानत्वमित्यद्वैतदीपिकायाम् २ सद्वैलक्षण्ये सत्यपरोक्षप्रतीतिविषयत्वमित्यद्वैतसिद्धौ ३ प्राग-भावप्रतियोगित्वमिति न्या० ॥ ३९६ ॥

असत्त्वापादकावरणम्—(कूटस्थः) नास्तीत्यसत्त्वा-पादनप्रयोजकीभूतमावरणम् ॥ ३९७ ॥

असदुत्तरम्—स्वव्याघातकमुत्तरम् ॥ ३९८ ॥

असभ्यः—सभायामनुपयुक्तः ॥ ३९९ ॥

असमवायिकारणम्—कार्यकारणभावसम्बन्ध्येकार्थ-समवेतकारणम् ॥ ३६० ॥

असम्बन्धः—परस्परमन्वयाभावः १ यद्वा प्रतियो-गितानुयोगितान्यतरसंबन्धेन समवायाभावः ३६२

असम्भवः—लक्ष्यमात्रावृत्तित्वम्, यथा गोरेकशफवत्त्वलक्षणं लक्ष्यगोमात्रावृत्ति, गोर्द्विशफवत्त्वात् १ लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वमिति न्या० ॥ ३६४ ॥

असम्भावना—बलवन्निषेधकोटिकः संशयः । सा प्रमाणगतप्रमेयगतभेदेन द्विविधा ल०त०श०द्र० ।

असाधारणत्वम्—तन्मात्रवृत्तिधर्मयुक्तत्वम् १ लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वम् । अव्याप्त्यसंभवग्रस्तयोर्वारणाय सत्यन्तम्, अतिव्याप्तस्य वारणाय विशेष्यम् ३६७

असाधारणकारणत्वम्—कार्यतावच्छेदकावच्छिन्नकार्यानुत्पादकत्वे सति कार्यविशेषोत्पादकत्वमित्यद्वैतकौ० १ कार्यत्व(व्याप्यध०)अतिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वमिति नै०।

असूया—गुणेषु दोषावि(ष्कारः १)ष्करणम् २ परकीयगुणेषु दोषारोपो वा ॥ ३७२ ॥

---

१ तद्वृत्तित्वे सति तदितरावृत्तित्वमित्यर्थः ।

**असंसक्तिभूमिका**—सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि निर्विकल्पकसमाध्यवस्था। सुषुप्तिवद्भेदादेर्विस्मरणात्सुषुप्तिरिति चोच्यते ॥३७३॥

**अस्तेयम्**—परस्वानपहरणम् १ अदत्तादानरूपपरस्वहरणराहित्यं वा ॥ ३७५ ॥

**अस्पष्टब्रह्मलिङ्गकत्वम्**—सम्भाव्यमानस्वारस्यजीवलिङ्गाभिभूतब्रह्मलिङ्गकत्वम्, यथा सर्वत्र प्रसिद्धाधिकरणे जीवे विषये स्वरसानि मनोमयत्वादीनि सत्यकामत्वादिब्रह्मलिङ्गान्यभिभवन्तीत्यनन्तकृष्णेन ॥ ३७६ ॥

**अस्मिता**—अहङ्कारस्य सूक्ष्मावस्था १ * अहङ्कारधर्म्यध्यासः २ बुद्ध्यादावभेदाभिमानो वा।

**अहङ्कारः**—अभिमानात्मिकान्तःकरणवृत्तिः ३८०

**अहङ्ग्रहोपासना }** **अहङ्ग्रहध्यानम्**— उपास्य स्वरूपस्य स्वाभेदेन चिन्तनम् १ ध्येय स्व० ॥३८२॥

**अहिंसा**—वाङ्मनःकायैः सर्वभूतानामनभिद्रोहः १ प्राणवियोगप्रयोजकव्यापारराहित्यमिति ग्रं० २ अशास्त्रीयप्राणिपीडनाभाव इति मता० ॥३८५॥

## आ

आकाङ्क्षा—अन्वयानुपपत्तिः १ * येन पदेन विना यस्य पदस्याऽन्वयबोधाऽजनकत्वं तेन तस्य समभिव्याहारः, यथा 'द्वारमि'त्यनेन 'पिधेही'त्यादेः, इत्यद्वैतग्रन्थे २ तादृशशाब्दबोधे तादृशशाब्दबोधाभाव इति माथुरी ३ समानविभक्तिकयोरभेदानुभावबलाद्विशेषणान्वितविभक्तेरभेदार्थकत्वमिति चिन्तामणौ ४ अन्वयबोधसमर्थत्वे सत्यजनिततात्पर्यविषयान्वयबोधकत्वमिति ग्रं० ॥ ३९० ॥

आकारमौनम्—अवचनमात्रमौनम् ॥ ३९१ ॥

आकाशम्—शब्दगुणकम्। असम्भववारणाय शब्दगुणोभयम् १ शब्दसमवायिकारणमिति ग्रं० २* आवरणाभावाधिकरणम् ३ आवरणविरोध्यवकाशो वा ४ * संयोगाजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणमिति सर्वद०सं० ॥ ३९६ ॥

आक्षेपः—स्वयमुक्तस्यार्थस्य किञ्चिन्निमित्तमभिस-

न्धाय प्रतिषेधः १ * समानवित्तिवेद्यत्वमाक्षेपत्व-
मिति गुरवः ३९८ [त्ययत्वम् ३९९
आख्यातत्वम्—सुब्भिन्नत्वे सति सङ्ख्याबोधकप्र-
आख्यानम्—पूर्ववृत्तकथनम् १ स्वयं दृष्टार्थकथनं वा।
आख्यायकः—परोक्तस्यान्यत्र कथकः ॥ ४०२ ॥
आख्यायिका—उपलब्धार्थबोधिका ॥ ४०३ ॥
आगमप्रमाणम्—शाब्दप्रमाकरणम् १ आप्तोक्तार्थ-
विषयिणी शब्दजन्या वृत्तिरिति ग्रं० ॥ ४०६ ॥
आचार्यः—मतप्रस्थापकः १ मन्त्रव्याख्याकृद्वा २
आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि, स्वय-
मप्याचरेद्यस्तु स आचार्य इति स्मृतः ३ स
त्रिविधः 'चोदको दर्शयेन्मार्गं बोधकः स्थानमा-
चरेत्, मोक्षदस्तु परं तत्त्वं यज्ज्ञात्वा परमश्नुते।
आज्ञा— } निकृष्टस्य भृत्यादेः कृत्यादौ प्रवृत्त्यर्थ-
आदेशः } व्यापारः ॥ ४१० ॥
आज्ञाकारी—आज्ञानुसारेण कर्मकर्त्ता ॥ ४११ ॥
आज्ञाभङ्गः—स्वविषयेषु प्रचाराभावः ॥ ४१२ ॥

आत्मख्यातिः-विज्ञानात्मन एवाध्यस्तपदार्थाकारेण भानमिति विज्ञानवादिमते ॥ ४१३ ॥

आत्मघाती-व्यापादयेद्वृथात्मानं स्वयं योऽग्न्युदकादिभिः, अवैधेनैव मार्गेण आत्मघाती स उच्यते

आत्ममदः-अहङ्कारभरितस्य विद्यादिभिर्मम समः को वेत्तिप्रज्ञाहेतुर्मदः ॥ ४१५ ॥

आत्मा-ज्ञानाद्यधिकरणम् १ अमूर्त्तसमवेतद्रव्यत्वापरजातिर्वेति तार्किकाः २ सर्वदेहेषु पूर्णः ३ अहं प्रत्ययविषयो वेति वे० ४ 'यच्चाऽऽप्नोति यदादत्ते यच्चाति विषयानिह, यच्चास्य सन्ततोभावस्तस्मादात्मेति कथ्यते' ५ 'यदस्ति यद्भाति तदात्मरूपं नान्यत्ततो भाति न चान्यदस्ति, स्वभावसंवित्प्रविभाति केवला ग्राह्यं गृहीतेति मृषैव कल्पना।

आत्माश्रयत्वम्-स्वग्रहसापेक्षग्रहकत्वम् १ इतराव्यवधानेन स्वजनने कारणत्वेन स्वापेक्षणत्वं वेति वे० मते २ स्वापेक्षाऽऽपादकप्रसङ्गत्वम्, यथा ज्वरोपसर्गयुक्तो रोगो ज्वर इत्युक्तौ, ज्वराज्ञानवन्त-

मुद्दिश्य ज्वरे लक्षणीये ज्वरज्ञानापेक्षायां तदभावा-त्कथं ज्वरोपसर्गज्ञानं सम्भविष्यति ३ स्वस्याऽव्यव-हितस्वापेक्षितत्वं वाऽन्योन्याश्रयव्यावर्तनायाऽव्य-वहितेति न्या० ॥ ४२४ ॥

**आत्यन्तिकदुःखनिवृत्तिः**—स्वाधिकरणदुःखप्राग-भावासमानाधिकरणा दुःखनिवृत्तिः ॥ ४२५ ॥

**आत्यन्तिकप्रलयः**—ब्रह्मसाक्षात्कारनिमित्तकत्वे स-त्यज्ञानसहितसकलभावकार्योच्छेदः ॥ ४२६ ॥

**आधारः**—अधिकरणम् १ * अतद्रूपोपि तद्रूपेणा-रोप्य बुद्धौ स्फुरन्नेति सङ्क्षेपशा० २ शबले संसृ-ष्टतयाध्यस्तोऽधिष्ठानांश इति ग्रं० ३ अध्यस्तेन सहाभिन्नप्रतीतिविषयत्वमाधारत्वम् ॥ ४३० ॥

**आधिदैविक** तापः— / दुःखम् } देवान् यक्षरक्षआदीन् दिवः प्रभवान् वातवर्षातपशीतोष्णा-दीन् वाधिऽकृत्य निमित्तीकृत्य जायमा(नं दुः-खम् १)नस्तापः ॥ ४३२ ॥

---

१ यादृश्या दुःखनिवृत्तेरुत्तरं पुनर्दुःखान्तरं नोत्पद्यते तादृशी दुःखनिवृत्तिः ।

आधिभौतिकतापः—दुःखम् } भूतानि जरायुजाण्डजस्वेदजोद्भिज्जरूपाणि चौरवैरिवृश्चिककुक्कुरसिंहव्याघ्रमहिषपक्षिसर्पयूकादंशमशकनक्रमकरवृक्षशिलाप्रभृतीनि चराचरजातीयानि निमित्तीकृत्य जायमा(नं दुःखम् १) नस्तापः ४३४

आध्यात्मिकतापः—शरीरमनसी अधिकृत्य जायमानस्तापः १ स द्विविधः शारीरो मानसश्चेति। वातपित्तश्लेष्मणा वैषम्यनिबन्धनो ज्वरादिराद्यः, परकर्तृकापकारादिनिबन्धनः क्रोधादिर्द्वितीयः ४३९

आनन्दः—सात्त्विकैकाग्रबुद्धिप्रतिबिम्बितः सुखरूप आत्मा १ निरुक्तात्मप्रतिबिम्बिता वृत्तिर्वा २ निरुपाधिकेष्टत्वम् ॥ ४३८ ॥

आनन्दमयकोशः- सुखाकारवृत्तिमदन्तःकरणमज्ञानपर्यन्तम् १ आनन्दप्रचुरत्वे सति कोशवत्प्रत्यक्तनाच्छादकः ॥ ४४० ॥

आनुपूर्वित्वम्—तदुच्चारणानन्तरोच्चारणविषयत्वम् ।

**आनुषङ्गिकम्**—उद्देश्यान्तरप्रवृत्तस्य तत्कर्मनान्तरीयतया प्राप्तम्, यथा भिक्षामटन् यदि गां पश्यति तदा भिक्षार्थं प्रवृत्तस्य गोदर्शनम्॥४४३॥

**आपत्तिः**—सम्यग्वर्त्तनोपायानुपलम्भः ॥ ४४४ ॥

**आपातज्ञानम्**—अज्ञाननिवृत्तावसमर्थं ज्ञानम् १ अप्रामाण्यशङ्कास्पदज्ञानत्वमापातज्ञानत्वम् ॥४४६॥

**आप्तत्वम्**—प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् १ लोकवेदसाधारणं प्रतारणाद्यजन्यहिताहितोपदेशकर्तृत्वे सति तद्भिन्नोपदेशाकर्तृत्वं वा ॥ ४४८ ॥

**आभिमुख्यम्**—आनुकूल्यार्थसम्मुखीभवनम् ४४९

**आयुः**—जीवितावच्छिन्नः कालः १ प्राणधारणानुकूलो व्यापार इति ग्रं० ॥ ४५१ ॥

**आयुर्वेदः**—आयुर्हिताहितं व्याधेर्निदानं शमनं तथा, विद्यते यत्र विद्वद्भिः स आयुर्वेद उच्यते ४५२

**आरम्भः**—प्राथमिकव्यापारोपक्रमः १ * स्वार्थं परार्थं वा कुटीपुस्तकादिसम्पादनव्यापारः ॥ ४५४ ॥

आरम्भककारणम्—अनेककारणसंयोगवत्त्वे सति कार्यजनकं कारणम् ४५९ [यमानं कर्म।
आरादुपकारकाङ्गम्—द्रव्याद्यनुद्दिश्य केवलं विधी-
आरोपः—अतद्वति तत्प्रकारकज्ञानम् ४५९ [पारः।
आर्थीभावना—प्रयोजनेच्छाजनितक्रियाविषयव्या-
आर्यावर्त्तः—विन्ध्यहिमाचलयोर्मध्यदेशः ॥४६१॥
आलयविज्ञानम्—आलयं लयपर्यन्तस्थायि विज्ञानम्
आलस्यम्—प्रयत्नेन कर्तव्ये कार्ये श्रद्धावैधुर्येणोत्सा-हाभावः ॥ ४६३ ॥
आलापनत्वम्—परस्परकथोपकथनत्वम् ॥ ४६४ ॥
आलिङ्गनम्—प्रीतिपूर्वकपरस्पराश्लेषः १ अङ्गेना-ङ्गसंयोजनत्वमालिङ्गनत्वम् ॥ ४६६ ॥
आवरणत्वम्—अस्ति प्रकाशत इति व्यवहारयोग्ये नास्ति न प्रकाशत इति व्यवहारयोग्यत्वम् ४६७
आवरणशक्तिः—स्वाश्रयात्माद्यावरणानुकूलमज्ञान-निष्ठं सामर्थ्यम् ॥ ४६८ ॥

**आवृत्तिः**—भूय एकजातीयक्रियाकरणम् १ * स्व-स्थानस्थितस्य पुनरनुसन्धानम् ॥ ४७० ॥

**आशा**—इदं कृत्वेदं करिष्यामीति सङ्कल्पविकल्प-प्रवाहानुपरमः ॥ ४७१ ॥

**आशीर्वादमङ्गलम्**—परमेश्वरात्स्वस्य स्वशिष्यस्य वा वाञ्छितार्थप्रार्थनम् ॥४७२॥

**आश्रयासिद्धत्वम्**-पक्षतावच्छेदकाभाववत्पक्षकत्वम्।

**आसक्तिः**—विषयान्तरपरिहारेणैकविषयावलम्बनम्।

**आसत्तिः**—यत्पदार्थेन सह यत्पदार्थस्यान्वयोपेक्षितस्तयोः पदयोरव्यवधानम् १ ग्रन्थान्तरे तु शक्ति-लक्षणाऽन्यतरसम्बन्धेनाव्यवधानेन पदजन्यपदार्थो-पस्थितिः । प्रमाणान्तरजन्यायाः पदार्थोपस्थिति-वारणाय पदजन्येति, लिङ्गविधयापदजन्यपदार्थोप-स्थितिवारणाय शक्तीत्यादि, शक्तिलक्षणे निरूपि-ते व्यवहितपदजन्यपदार्थोपस्थितेरासत्तित्ववारणा-याव्यवधानेति ॥ ४७६ ॥

आसनम्—स्थिरसुखम् १ सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम्, आसनं तद्विजानीयादन्यत्सुखविनाशनम् ॥ ४७८ ॥

आसनफलत्वम्—द्वन्द्वानभिघातत्वम् ॥ ४७९ ॥

आसनोपायः-प्रयत्नशैथिल्यमनन्तसमापत्तिर्वा ।

आस्तिकत्वम्—शास्त्राद्युक्तविषये विश्वासवत्त्वम् ।

आहार्यज्ञानम्—बाध(समानकालिके०) कालीनेच्छाजन्यम्, यथा माणवके प्रेम्णा चिन्तामणिबुद्धिः ।

आहुतिः—देवोद्देशेन मन्त्रेणाग्नौ हविःक्षेपः ४८३

इ

इच्छा-इष्टसाधनताज्ञानजन्योऽभिलाषः १ * इच्छामीत्यनुभवविषयवृत्तिगुणत्वव्याप्यजातिमतीति न्या०

इतिहासः—पुरावृत्तप्रतिपादनम् १ धर्मार्थकाममोक्षाणामुपदेशसमन्वितत्वे सति पूर्ववृत्तकथायुक्तत्वमिति ग्रं० ॥ ४८८ ॥

इन्द्रजालम्—प्रत्यक्षतो मिथ्याऽर्थप्रदर्शनम् १ मन्त्रद्रव्यविशेषान्यतरसंयोगेनाद्भुतवस्तुदर्शकव्यापारत्वमिन्द्रजालत्वम् ॥ ४९० ॥

इन्द्रियम्—सुखदुःखानुकूलसाक्षात्कारप्रमितिक्रियान्यतरकरणमतीन्द्रियम् । आलोकादावतिव्याप्तिवारणायातीन्द्रियमित्युक्तम्, धर्मादावतिव्याप्तिवारणायाद्यविशेषणम्, अनुमित्यादिकरणेऽतिव्याप्तिवारणाय साक्षादितीत्यद्वैतकौस्तुभे १ शरीरसंयुक्तं ज्ञानकरणमतीन्द्रियमिति तर्ककौमुद्याम् २ आत्मान्यत्वे शब्देतरोद्भूतविशेषगुणानाश्रयत्वे वा सति ज्ञानकारणमनःसंयोगाश्रयत्वम् । आत्मवारणाय सत्यन्तम्, कालादावतिव्याप्तिवारणाय विशेष्यमिति न्यायमुक्तावल्याम् ॥ ४९४ ॥

ई

ईर्ष्या—पराश्रियामसहिष्णुता १ परसम्पदुत्कर्षासहिष्णुत्वमिति ग्रं० ॥ ४९८ ॥

---

१ शब्देतरे ये उद्भूतविशेषगुणाः घटनिष्ठरूपादयस्तदनाश्रयत्वं ज्ञानस्य कारणभूतो यो मनःसंयोगस्तदाश्रयत्वं च चक्षुरादावस्तीत्यर्थः ।

**ईश्वरः**—नित्यज्ञानाद्यधिकरणमिति न्या० १ अद्वैतमते तु मा(योपहितम् २)याविशिष्टं चैतन्यम् ३ मायाप्रतिबिम्बितं वा ४ समष्टिकारणशरीरोपहितं चैतन्यं वेति मतां० ५ योगमते तु क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ६ त्रैकालिकबन्धशून्यत्वम्। बन्धशून्यत्वमात्रोक्तौ मुक्तप्रकृतिलयेष्वतिव्याप्तिरिति त्रैकालिकत्वं बन्धविशेषणं तथा च मुक्तेषु भूतबन्धस्य प्रकृतिलयेषु च भाविबन्धस्य सत्त्वान्न तत्रातिव्याप्तिरीश्वरस्य तु त्रैकालिकबन्धशून्यत्वादिति योगमञ्जर्याम् ७ अङ्कुरादिरूपं कार्यं कर्तृजन्यं कार्यत्वाद्घटवत् ॥५०५॥

**ईश्वरप्रणिधानम्**-सर्वकर्मणां भगवत्यर्पणम् १ भगवद्भक्तिर्वा ॥ ५०७ ॥

**ईश्वराश्रयाप्रमा**—ईक्षणापरपर्यायस्रष्टव्यविषयाकारमायावृत्तिप्रतिबिम्बिता चित् ॥ ५०८ ॥

## उ

**उच्चारणम्**-कण्ठताल्वाद्यभिघातेन शब्दजनकव्यापारः

**उत्तम्भकत्वम्**—प्रतिबन्धकशक्तिरोधकत्वम्॥९१०॥

**उत्तरम्**—दोषभञ्जनवाक्यम् १ जिज्ञासितविषयावेदकवाक्यं वा २ * सिद्धान्तानुकूलतर्कोपन्यासत्वमुत्तरत्वमिति पु० ॥ ९१४ ॥

**उत्तरा**—स्वापेक्षयामेरुसन्निहिता दिक् ॥ ९१९ ॥

**उत्तर ब्रह्म मीमांसा**—उत्तरस्य वेदशेषभागस्य उपनिषद्रूपस्य मीमांसा पञ्चाङ्गन्यायोपेतवाक्यसमुदायात्मको विचारः ॥ ९१६ ॥

**उत्तेजकत्वम्**—शक्त्यनुकूलत्वम् १ प्रतिबन्धकविद्यमाने सति कार्यजनकत्वं वेति ग्रं० २ प्रतिबन्धकस्य प्रतिबन्धकत्वमिति साङ्ख्याः ३ प्रतिबन्धककोटिप्रविष्टाभावप्रतियोगित्वमिति प्राभाकराः ४ कारणीभूताभावप्रतियोगितावच्छेदकीभूताभावप्रतियोगित्वमिति न्या० ५ कारणाभावातिरिक्तकार्याभावप्रयोजकाभावप्रतियोगित्वम् ६ यद्वा प्रतिबन्धकाभावेतरसकलसाधनसमवधाने कार्याभावप्रयोजकाभावप्रतियोगित्वमित्यद्वैतदीपिकायां पूर्व-

पक्षे ७ सामग्र्यां सत्यां कार्यानुत्पादप्रयोजकाभावप्रतियोगित्वमिति सिद्धान्ते ॥ ९२४ ॥

उत्पत्तिः जनिः— } उत्तरक्षणसंबन्धः १ स्वकारणसंसर्गो वा २ कार्यस्याद्यक्षणसत्तासम्बन्धो वा ३ प्राथमिकप्रतीतिविषयप्रवृत्तिसाधनमिति ग्रं० ४ स्वाधिकरणक्षण(ध्वंसानधिकरणक्षणसम्बन्ध इति शितिकण्ठ्याम् ५)अवृत्तिप्रागभावप्रतियोगिक्षणसंबन्ध इति बौद्धाधिकारे ॥ ९३० ॥

उत्पत्तिविधिः—कर्मस्वरूपमात्रबोधको विधिः, यथा "आग्नेयोऽष्टाकपालो भवती"त्यादिः ॥ ९३१ ॥

उत्सवः—आनन्दजनकव्यापारः ॥ ९३५ ॥

उत्साहः—अन्यैरशक्यतयाऽवधृतेऽप्यवश्यकर्तव्यताबुद्धिः ॥९३६॥ [व्यसनम् ९३७

उत्सा(सव)हव्यसनम्—नृत्यगीतादिदर्शनेच्छाहेतु-

---

१ सामग्र्यनन्तरकालीनो यः कार्यानुत्पादः तद्व्यतिरेकव्याप्यव्यतिरेकप्रतियोगिनो योऽभावः तत्प्रतियोगित्वमित्यर्थः ।

**उदासीनत्वम्**—विवदमानयोरुभयोः(उपेक्षक.)प्रेक्षकत्वम् १ विवदमानयोरेकतरपक्षानवलम्बकत्वम्।

**उदाहरणम्**—साध्यसाधनव्याप्तिप्रदर्शकम् १ व्याप्तिप्रतिपादकदृष्टान्तवचनं वा २ दीधितिकारस्तु इतरार्थान्वितस्वार्थबोधकन्यायावयवत्वम् ॥ ९४२ ॥

**उद्देशः**—वस्तुप्रतिपादकनाममात्रम् १ नाममात्रेण वस्तुसङ्कीर्त्तनम् २ यथा द्रव्यगुणेत्यादीति पु० ९४४

**उद्देश्यत्वम्**—विधेयतानिरूपकत्वमिति न्या० २ मानान्तरप्राप्तत्वे सति विधेयान्वयित्वमिति मी० ३ सिद्धप्रमितिविशिष्टतयासिद्धत्वमिति चित्सुख्याम्।

**उद्भूतत्वम्**—रूपादिविशेषगुणगतो जातिविशेषः९४९

**उपकरणम्**—प्रधानसाधकम्१ उपक्रियतेऽनेन ९९१

**उपकारः**—सहकारि(लाभः १)भिः कारणस्य कार्योत्पादनार्थमानुगुण्यम् ॥ ९९३ ॥

**उपकुर्वाणब्रह्मचारी**—विवक्ष्यन्[1] गृहीतब्रह्मचर्यव्रतः।

---

१ विवक्ष्यन्=विवाहं करिष्यमाणः।

**उपक्रमोपसंहारौ**—प्रकरणप्रतिपाद्यस्याद्यन्तयोः प्रतिपादनम्, यथा "सदेवसौम्येदमग्र आसीदि"ति।

**उपचारः**—शक्यार्थत्यागेनान्यार्थबोधनम्॥ ५५८॥

**उपजीवकत्वम्**—इतरालम्बकत्वम् १ मणिप्रभायां तु परम्परया साक्षाद्वा कार्यत्वम् २ उपजीवति कारणाश्रितं भवतीति व्युत्पत्त्योपजीवकशब्दः कार्यपर इति परिभाषेन्दुशेखरे॥ ५६१॥

**उपजीव्यत्वम्**—परम्परया साक्षाद्वा जनकत्वम् १ उपजीव्यते कार्येणाश्रीयते इति व्युत्पत्त्योपजीव्यशब्दः कारणपरः तद्विविधम् स्वसत्ताप्रयोजकत्वम्, स्वज्ञानप्रयोजकत्वञ्चेति॥ ५६३॥

**उपजीव्योपजीवकभावः**—ज्ञानसत्त्वयोः प्रयोज्यप्रयोजकभावः, यथा एकस्यान्यसत्ताप्रयोजकत्वमपरस्य च तत्प्रयोज्यसत्ताकत्वम्। एवमन्यज्ञानप्रयोजकत्वमन्याधीनज्ञानविषयत्वञ्च यथायथं प्रयोगानुसारे बोध्यम् ५६४ [पादको ग्रन्थसंदर्भो वा

**उपदेशः**—हितकथनम् १ अपेक्षितार्थजातस्य प्रति-

**उपनयः**–प्रकृतोदाहरणोपदर्शितव्याप्तिमद्धेतुविशिष्टपक्षबोधकः ॥ ९६७ ॥

**उपपत्तिः**–प्रकरणप्रतिपाद्यार्थनिर्णायकम् १ प्रकरणप्रतिपाद्यस्य दृष्टान्तैः प्रतिपादनम्, यथा"सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्यमि"त्यादिना मृदादिदृष्टान्तैरद्वितीयवस्तुप्रतिपादनमित्यद्वैतकौस्तुभे ॥ ९७० ॥

**उपपादकत्वम्**–उपपाद्याभावव्याप्याभावप्रतियोगित्वम् ॥ ९७१ ॥

**उपपाद्यत्वम्**–उपपादकाभावव्यापकाभावप्रतियोगित्वम् ॥ ९७२ ॥

**उपमर्दः**-पूर्वधर्मिविनाशनेन धर्म्यन्तरोत्पादनम् ९७३

**उपमा**-कस्मिंश्चिदेवार्थे यः प्रसिद्धो गुणस्तदन्यस्मिन्नप्रसिद्धस्तद्गुणेऽर्थे शब्दमात्रेण यदुपसंयोज्य तद्गुणप्रकाशनम् ॥ ९७४ ॥

**उपमानप्रमाणम्**–सादृश्यप्रमाकरणम् १ उपमितिप्रमाकरणम्। कुठारादिवारणाय मितीति, प्रत्यक्षा-

दिवारणायोपेति ग्रं० २ व्यापारवत्तासम्बन्धेनोप-मित्यसाधारणकारणत्वमिति पु० ३ सदृशदर्शना-दसन्निकृष्टार्थज्ञानमिति मी० ४ सञ्ज्ञासञ्ज्ञिसम्ब-न्धप्रमाकरणमिति नै० ॥ ९७९ ॥

उपमितिप्रमा–संज्ञासंज्ञिसंबन्धज्ञानम् । अनुमित्या-दिवारणाय संबन्धेति, संयोगादिवारणाय संज्ञासं-ज्ञीति न्या० १ परोक्षधर्मिकं सादृश्यज्ञानजन्यं ज्ञानम् २ सादृश्यज्ञानादपरत्रासंनिकृष्टे सादृश्य-ज्ञानं वेति वे० ३ सादृश्यवैसादृश्यान्यतरधीक-रणिकेति खण्डनोद्धारे ॥ ९८२ ॥

उपमेयत्वम्–सादृश्यानुयोगित्वम् ॥ ९८४ ॥

उपयोगत्वम्–स्वजन्यावान्तरापूर्वद्वारेण निमित्तत्वम्

उपयोगी–इष्टसिद्धिसाधनानुकूलव्यापारः ॥९८८॥

उपरतिः-कर्मादौ तत्साधने च दोषदर्शनपूर्विका घृणा १ ज्ञानार्थविहितनित्याद्यागमजन्यकर्मसंन्यासो वा।

---

१ एतद्दृष्टगवयसदृशी मदीया गौरिति ।

**उपलक्षणत्वम्**—स्वप्रतिपादकत्वे सति स्वेतरप्रतिपादकत्वम् १ यद्वा स्वार्थबोधकत्वे सतीतरार्थबोधकत्वम् २ वेदांतमते तु कादाचित्कत्वे सति व्यावर्त्तकत्वम्, यथा काकादिकं देवदत्तगृहादेः॥५९१॥

**उपलक्षितत्वम्**—स्वसमानाधिकरणस्वोत्तरकालीनस्व-प्रतियोगिकाभाववत्त्वसंबन्धेन स्वसंबन्धित्वम् ५९२

**उपवासः**—अहोरात्रभोजनाभावः ५९३ [नम्

**उपव्याख्यानम्**—फलमाहात्म्योपासनप्रकारादिकथ-

**उपसंहारः**—सामान्यप्राप्तस्य विशेषे नियमनमिति मी० १ एकत्र श्रुतार्थस्यान्यत्रान्वयार्थमुपक्षेपः, यथा गुणोपसंहार इति वे० ॥ ६०० ॥

**उपस्थः**—सुखक्रियासाधनम् १ व्यवायाऽऽनन्दसाधनमिन्द्रियं वा ६०२ [कथनं वा।

**उपाख्यानम्**—पूर्ववृत्तान्तकथनम् १ श्रुतस्यार्थस्य

**उपादानकारणम्**—कार्याभिन्नकारणम् १ कार्या-(नुगतं) न्वितं कारणं वा, यथा घटादेर्मृदादि। निमित्तकारणेऽतिव्याप्तिवारणायादिविशेषणम्, रूपादा-

वतिव्याप्तिवारणाय द्वितीयम् २ स्वतादात्म्यापन्न-कार्यजनकमिति कैवल्यकल्पद्रुमे ३ स्वाभिन्नकार्य-जनकम् ४ वे० सि० लेशटीकायां तु कार्याधा-रत्वे सति कार्यजनिहेतुत्वम्। निमित्तकारणवार-णाय सत्यन्तम्, भूतलादेरपिकार्याधारत्वात्तद्वार-णाय विशेष्यदलम् ॥ ६०९ ॥

उपादेयत्वम्—आदानक्रियाविषयत्वम् ॥ ६१० ॥

उपाधिः—स्वस्मिन्निव स्वसंसर्गिणि स्वधर्माऽऽसञ्जकः १ स्वान्वितांशविधेयानन्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वमुपाधित्वम्। प्रथमसत्यन्तेन नीलं घटं पश्येत्यादौ नीलत्वादेरुपाधित्वनिरासः, काकै-र्गृहं पश्येत्यादौ काकादेर्द्वितीयसत्यन्तेन निरासः, घटपटौ पश्येत्यत्र परस्परस्य परस्परोपाधित्ववारणाय विशेष्यदलम् २ कार्यानन्वयित्वे सति व्यावर्तकत्वे सति कार्यकाले नियमेन विद्यमानत्वम्, यथा जपा-कुसुमादिकं स्फटिके लौहित्योपाधिरिति वे० सि० लेशटीकायाम् ३ उपसमीपे स्थित्वा स्वीयं रूपम-

न्यत्राद्धातीति वे० ४ साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति नै० ॥ ६१५ ॥

**उपाध्यायः**—एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः, योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यत इति भविष्ये ॥ ६१६ ॥

**उपार्जनत्वम्**-स्वत्वसम्पादकव्यापारत्वम् ॥६१७॥

**उपासना-नम्** } निकृष्टेषूत्कृष्टबुद्धिः १ यद्वा चिन्तनापरपर्यायमनना(त्मकमानसव्यापारः २ ) त्मिका मानसीक्रिया ३ वस्तुस्वरूपानपेक्षं पुरुषेच्छामात्रतन्त्रं मानसं प्रवाहरूपमिति ग्रं० ४ सा द्विविधा प्रतीकोहङ्ग्रह [४४पृष्ठे] श्चेति ल० तत्तच्छब्दे द्र० ६२३ [ धनत्वम् ६२४

**उपासनाकाण्डत्वम्**—मन्त्रोदितार्थस्येतिकर्तव्यताबो-

**उपेक्षा**—पापेषु सत्कारतिरस्कारयोरौदासीन्यम् १ परस्वत्वानभिसन्धानापूर्वकस्वत्वप्रागभावासमानकालीनस्वत्वाविषयकेच्छेति व्यवहारज्ञाः ॥ ६२७ ॥

**उपोद्घातः**—प्र(कृतार्थं मनसि निधाय तद०)तिपाद्य-मर्थं बुद्धौ सङ्गृह्य प्रागेव तदर्थमर्थान्तरवर्णनम्। प्रतिज्ञातवर्णनं व्यावर्तयितु**मर्थान्तरे**ति, असम्बद्धार्थवर्णनव्यावृत्त्यर्थं **तदर्थ**मिति, अग्निमानयमिति प्रतिज्ञाय धूमवत्त्वादित्यर्थान्तरवर्णनं व्यावर्तयितुं **प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्ये**त्युक्तम्, तावत्युक्ते बुद्धौ सङ्गृह्य पश्चात्प्रतिज्ञाय यद्वर्णनं तस्योपोद्घातत्वं व्यावर्तयितुं **प्रागेवे**ति तत्त्वदीपने [1] प्रकृतोपपादकत्वमुपोद्घातत्वम् २ निर्दिष्टोपसाधकत्वं वेति ग्रं०।

**उभयकर्मजसंयोगः**—स्वजनकक्रियाऽभाववदसमवेतसंयोगः ॥ ६३२ ॥

**उल्लापः**—शोकरोगादिना ध्वनिविकारः ॥ ६३४ ॥

**उल्लेखः**—इदं कर्त्तव्यमित्यादिना संकल्पितार्थप्रतिपादकशब्दोच्चारणम् ॥ ६३५ ॥

**उल्लेखनम्**—संकल्पितार्थकवाक्योच्चारणम् ॥६३६ ॥

---

१ शब्दप्रयोगात्प्रागेवेत्यर्थः।

ऊ

ऊहः—पदान्तरेणाकाङ्क्षापूरणार्थाध्याहारः १* शिष्येणानुक्तस्याप्यूहनम् २ यद्वा उपदेशसमसमयं शिष्यप्रतिपत्त्यनुकूलापूर्वयुक्तिकल्पनमित्युपदेशसा० टी० ३ अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्वकत्वे सत्यन्वययोग्यविभक्त्यादिकल्पनम्, यथा पार्वणे सौम्यास इति बहुवचनमन्वितमप्येकोद्दिष्टे अनन्वितत्वात्सौम्य इत्येकवचनान्ततया कल्पनमिति श्राद्धतत्त्वटीकायाम् ४ प्रकृतावाम्नातस्य विकृतौ समवेतार्थत्वाय तदुचितपदान्तरस्य प्रक्षेपेण पाठ इति मी० ६४१

ऋ

ऋक्—यत्रार्थवशेन पादव्यवस्थितिरिति शास्त्रदीपिकायाम् १ नियताक्षरपादावसाना २ पादबद्धगायत्र्यादिच्छन्दोविशिष्टमन्त्रो वा, यथा अग्निमीळे पुरोहितमित्यादिरिति मधुसूदनेनोक्तम् ॥ ६४४ ॥

ऋक्संहिता—अग्निमीळे इत्यादिकः(१०४७२मन्त्राः) ऋक्समुदायात्मकः ॥ ६४५ ॥

ऋग्वेदः—ऋग्बहुलो वेदः १ ऋगवयवको वेदो वा २ ऋग्विनियोजको वेदो वा ३ ऋग्द्रव्यको वेद इति न्यायसुधायां सोमेश्वरभट्टः ॥ ६४९ ॥

ऋणत्वम्—अवश्य ( शोध्यत्वम् १ ) देयत्वम् ६५१

ऋषित्वम्—अतीन्द्रियार्थदर्शित्वम् १ ग्रन्थान्तरे मन्त्र-द्रष्टृत्वम्, यथा वसिष्ठवामदेवादि ॥ ६५३ ॥

ए

एकत्वम्—प्रथमसङ्ख्यान्वितत्वम् १ एकत्वसङ्ख्यायोगित्वं वा २ द्वित्वाद्यभाववत्त्वं वा ३ * सजातीय-विजातीयस्वगतभेदशून्यत्वमिति वे० ॥ ६५७ ॥

एकदेशित्वम्—सिद्धान्तैकदेशाश्रयत्वे सति स्वतन्त्रा-धिकनिरूपकत्वम् ॥ ६५८ ॥

एकवाक्यत्वम्—एकार्थबोधकानां शब्दानां मिथ आ-काङ्क्षयैकस्यां बुद्धावारूढत्वम् १ भिन्नप्रतीतिविष-यानेकमुख्यविशेष्यरहितत्वसमानाधिकरणान्वीयमा-नपदार्थान्वयाभावप्रयुक्ताकाङ्क्षानिवृत्तिशून्यत्वं वा२

तद्द्विविधं पदैकवाक्यम्, वाक्यैकवाक्यञ्चेति ल० त०श०[ ११६-१७७ पृष्ठे ] द्र० ॥ ६६१ ॥

**एकाग्रभूमिः**—एकविषयकधारावाहिकवृत्तिसमर्थम्।

**एकेन्द्रियवैराग्यम्**—पक्वसर्वकषायज्ञानेन चित्तोत्सुकता १ यद्वा इन्द्रियान्तरेषूपसंहृतेष्वप्यनुपसंहृतस्य मनसो वृत्तिजिहासा ॥ ६६४ ॥

ऐ

**ऐकान्तिकत्वम्**-साधनानन्तरमवश्यं भावित्वम् ६६५

**ऐतिह्यप्रमाणम्**—विशेष्यानिर्णीतप्रथमप्रवक्तृकः शब्दविशेषः, यथात्र वटे यक्षः ॥ ६६६ ॥

**ऐश्वर्यम्**—इच्छानभिघातात्मकत्वम् ॥ ६६७ ॥

**औत्सुक्यम्**—रमणीयफलसाधनेनोत्कटेच्छा १ कार्याकार्याविचारेण प्रवृत्ताऽऽह्लादविशेषो वेति **गूढार्थदीपिकायाम्** ॥ ६६९ ॥

क

**कथा**—नानाकर्तृकपूर्वोत्तरपक्षप्रतिपादकवाक्यविस्तरइति **सिद्धिव्याख्यायाम्** १ विश्वनाथस्तु नानाप्रव-

त्तृकत्वे सति तद्विचारवस्तुविषया वाक्यसंदृब्धिः २ तत्त्वनिर्णयविजयान्यतरस्वरूपयोग्यो न्यायानुगतवचनसन्दर्भः । लौकिकविवादवारणाय **न्याये**-त्यादि ३ सा वादजल्पवितण्डाभेदेन त्रिधा ल० त०श०[ ८६-१७७-१८० पृष्ठे] द्र० ॥६७२॥

**कन्था**–त्यक्तं वस्त्रं गृहस्थेन बहिः प्रक्षाल्य यत्नतः, सहस्रडोरका(दिग्धा )दध्या सा कन्था च त्रिधीयते।

**करणत्वम्**–व्यापारवत्त्वे सत्यसाधारणकारणत्वम्, यथा छिदिक्रियां प्रति कुठारः । कालादिवारणाया-**साधारणेति**, व्यापारेऽतिव्याप्तिवारणाय **व्यापारवत्त्वे सतीति** न्या० १ क्रियानिष्पादकत्वम् २ * व्यापारभिन्नत्वे सत्यसाधारणकारणत्वमिति वे० ।

**करणापाटवत्वम्**[1]–इच्छाविषयीभूतवर्णाद्यननुकूलत्वमिति **तर्कप्रकाशे** श्रीकण्ठः ॥ ६७८ ॥

**करुणा**–दुःखिषु दुःखप्रहाणार्थं दया १ परदुःख-

---

१ करणम्=श्रोत्राद्यभिघातः तस्यापाटवम्=असामर्थ्य-मित्यर्थः ।

प्रहरणेच्छा वा ॥ ६८० ॥

**कर्त्तव्यत्वम्**—कर्त्तुं योग्यत्वम् १ कर्त्तुमुचितत्वं वा २ अवश्यं करणीयत्वं वा ॥ ६८३ ॥

**कर्त्ता—कर्त्तृत्वम्** } क्रियायां स्वतन्त्रः १ क्रियाऽनुकूलकृतिमत्त्वं वा २ इतरकारकाप्रयोज्यत्वे सति सकलकारक(प्रेरकत्वम् ३) प्रयोक्ता। कुठारादिकारकप्रयोक्तरि हस्तादावतिव्याप्तिवारणाय **कारकाप्रयोज्य**त्वाविशेषणम् ४ अद्वैतमते तु ज्ञानचिकीर्षाप्रयत्नाधारः ५ (निखिलजगद्) उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं वा ॥ ६८९ ॥

**कर्त्तुम्**—कारकान्तरप्रवर्त्तनव्यापारः ॥ ६९० ॥

**कर्म**—करणव्यापारवि(शेषः)षयः, यथा वास्यादिकरणव्यापारस्योद्यमननिपातनादेर्विषयः काष्ठादिः १* संयोगविभागयोरनपेक्षकारणम्। **अनपेक्षप**देन द्रव्यव्यावृत्तिः, **संयोगविभाग**द्वयग्रहणेन संयोगविभागव्यावृत्तिरिति श्रीधराचार्यः २ संयोगभिन्नत्वे सति संयोगासमवायिकारणम्। हस्त-

पुस्तकवारणाय सत्यन्तम्, घटादिवारणाय विशेष्यदलमिति **तर्कदीपिकायाम्** ३ संयोगाजन्यसंयोगासमवायिकारणवृत्तिसंयोगत्वासमानाधिकरणजातिमदिति शिवादित्यमिश्राः ४ वेदान्तमते तु शुभाशुभक्रियाजन्यमदृष्टम्, तच्च पुण्यपापमिश्रितमिति ५ प्रकारान्तरे तु शुभाशुभादृष्टजनको व्यापारः, तच्च नित्यनैमित्तिककाम्यप्रायश्चित्तनिषिद्धश्चेति ल०त०श०[७३ पृष्ठे] द्र०६ धात्वर्थतावच्छेदकपरसमवेतक्रियाफलशालित्वं कर्मत्वम् ६९७

**कर्मकाण्डम्**—कर्मणां कर्त्तव्यताप्रतिपादकं काण्डम् १ द्रव्यदेवताद्यर्थस्मारको वा ॥ ६९९ ॥

**कर्मधारयसमासः**—तुल्यविभक्तिलिङ्गयोरुभयोः पदयोः समानाधिकरणः, यथा कृष्णमृगः श्वेतपताका इत्यादिः ॥ ७०० ॥

**कर्ममीमांसा**—कर्मकाण्डवेदविचारग्रन्थः ॥ ७०१ ॥

---

१ अपादानव्यतिरिक्तत्वे सति परसमवेतक्रियाफलभागित्वमित्यर्थः

**कर्मेन्द्रियम्**—वदनादिव्यापारकरणमिन्द्रियम् १ अपञ्चीकृतपञ्चमहाभूतकार्यत्वे सति वचनादिक्रियासाधनम् ॥ ७०३ ॥

**कल्पः**—मन्त्रार्थसामर्थ्यप्रकाशकः १ यागप्रयोगप्रतिपादकः २ यज्ञपात्रनिर्माणप्रकारप्रतिपादकं शास्त्रं वा, यथा कात्यायनाश्वलायनापस्तम्बादिसूत्रम् ।

**कल्पना**—अविद्यमानपदार्थस्य अन्यत्र स्थितस्य अन्यत्र प्रतिभासरूपो मानसव्यापारः ॥ ७०८ ॥

**कषायः**—चित्तस्य रागादिना स्तब्धीभा ( वादखण्डवस्त्वनालम्बनम् १ ) वः ॥ ७१० ॥

**काणत्वम्**—चक्षुरिन्द्रियशून्यैकगोलकवत्त्वम् ७११

**कादाचित्कत्वम्**—सत्त्वे सति किञ्चित्कालवृत्त्यभावप्रतियोगित्वम् १ प्रागभावप्रतियोगित्वध्वंसप्रतियोगित्वान्यतरत्वमिति ग्रन्थान्तरे ॥ ७१३ ॥

**कामः**—इष्टविषयाभिलाषः १ स्त्र्यादिविषयकोऽभिलाषो वा २ स्त्रीपुंसव्यतिकरतृष्णेति ग्रं० ३ आत्मनोऽनुकूलेषु सुखहेतुषु दृश्यमानेषु श्रूयमाणेषु

स्मर्यमाणेषु वा तद्गुणानुसन्धानाभ्यासेन यो रत्यात्मको गर्धः सः ४ स बाह्यान्तरवासनामात्रभेदेन त्रिविधः। उपार्जितमोदकादिष्वाद्यः, आशामोदकादिषु द्वितीयः, पथिपतिततृणादिवदापाततः प्रतीतेषु वासनारूपश्चेति। काम्यते जनैरिति ७१८

**कामजयोपायः**—दमश्च निःसङ्कल्पश्च कामं शिथिलीकरोति १ पक्षान्तरे ब्रह्मचर्येण वस्तुविचारेण कामस्य निवृत्तिः ॥ ७२० ॥

**काम्यत्वम्**—तत्तत्फलकामनावदधिकारिकर्त्तव्यत्वम्।

**काम्यकर्म**—स्वर्गादीष्टसाधनम् १ स्वर्गादिफलकामनावदधिकारिकर्त्तव्यं वा यथा ज्योतिष्टोमादि ७२४

**कायत्वम्**—देहव्यापित्वगिन्द्रियत्वम् ॥ ७२५ ॥

**कायव्यूहत्वम्**—योगिरचितयुगपदनेकशरीरत्वम्।

**कारकम्**—व्यापारवत्कारणम् १ * क्रियाजनकम् २ क्रियाजनकशक्तिमत्त्वम् ॥ ७२९ ॥

**कारणत्वम्**—कार्यसहभूतत्वे सत्यनन्यथासिद्धनियतपूर्ववृत्ति(जातीय)त्वम्। अनियतरासभादिवारणाय

**नियते**ति, कार्यवारणाय **पूर्वे**ति, दण्डत्वादिवारणाया**नन्यथासिद्धे**ति १ कार्याव्यवहितप्राक्क्षणावच्छेदकत्वे सति कार्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वमिति पु० २ तद्द्विविधमुपादानकारणं निमित्तकारणञ्चेति, प्रकारान्तरे साधारणासाधारणञ्चेति ल०त०श०[४३-६२ पृ०] द्र०।

**कारिका**—अल्पाक्षरत्वे सति बह्वर्थज्ञापकः श्लोकः।

**कार्यत्वम्**—प्रागभावप्रतियोगित्वम्। कालादिवारणाय प्रागिति, असंभववारणाय **प्रतियोगी**तीति नै० १ कृतिसंसृष्टत्वम् २ कृतियोग्यत्वे सत्यलौकिकत्वं वेति मी० ३ वर्तमानावस्थोपपादनत्वमिति यो० ४ वेदान्तमते कारणत्वाभिमतवस्तुभिन्नत्वम् ५ कृतिसाध्यत्वे सति कृत्युद्देश्यत्वमिति चित्सु० ६ कालत्रयानन्वितत्वे सति प्रवृत्त्यभावविरोधित्वमिति सं०शा०टी० ७ नियतपश्चाद्भावित्वमिति वे०मु०टी० ८ आद्यक्षणसंबन्धित्वमिति केचित्॥७४१॥

**कार्याध्यासत्वम्**—दोषसम्प्रयोगसंस्कारजन्यज्ञानविषयत्वमिति **रत्नप्रभायाम्** ॥ ७४२ ॥

**कालः**—अतीतादिव्यवहारासाधारणं कारणम् १ विभुत्वे सति दिगसमवेतपरत्वासमवायिकारणाधिकरणमिति **सर्वद**० २ स भूतभाविवर्त्तमानभेदेन त्रिविधः ल०श०[१५०-१७५ पृष्ठे] द्र० ।७४४।

**कालपरिच्छेदः**—यत्किञ्चित्कालावृत्तित्वम् १ ध्वंसप्रागभावप्रतियोगित्वम् ॥ ७४६ ॥

**काव्यम्**—रमणीयार्थप्रतिपादकः शब्द इति **रसगङ्गाधरे** पण्डितराजः १ रसात्मकं वाक्यमिति **साहित्यदर्पणे** २ आनन्दविशेषजनकवाक्यम् ३ अर्थदोषशून्यत्वे सति व्याकरणादिदोषरहितत्वम् ।

**काष्ठमौनम्**—इङ्गितेनापि स्वाभिप्रायाप्रकाशनम् १ काष्ठमिव मौनम् ॥ ७५२ ॥ [वा ७५४

**किन्तु**—पूर्ववाक्यसङ्कोचज्ञापनम् १ प्रागुक्तविरुद्धार्थे

**कुम्भकप्राणायामः**—अन्तःस्तम्भवृत्तिः १ पीतस्य वायोश्चतुःषष्टिमात्राभिरायमनमित्यादर्शे ॥ ७५६ ॥

**कृतघ्नत्वम्**—कृतोपकारस्यापकारकत्वम् ॥ ७५७ ॥

**कृतज्ञत्वम्**—कृतोपकारज्ञातृत्वम् ॥ ७५८ ॥

**कृतनाशः**—कृतयोः पुण्यपापयोर्भोगमन्तरेण नाशः।

**कृतोपास्त्यधिकारी**
**मुख्याधिकारी**— } उपास्यसाक्षात्कारपर्यन्तोपास्तिः ॥ ७६० ॥

**कृपा**—स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा ॥ ७६१ ॥

**केवललक्षणा**—शक्यसाक्षात्सम्बन्धः। सा जहदजहज्जहदजहद्भेदेन त्रिविधा ल.[८-८६पृ.] द्रश्यम्७६२

**केवलव्यतिरेकित्वम्**—अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वम् ॥ ७६३ ॥

**केवलान्वयित्वम्**—अत्यन्ताभावाप्रतियोगित्वम् १ अत्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वं वा।

**कैवल्यम्**—
**निःश्रेयसम्** } विद्यया निरस्ताऽविद्यातत्कार्यब्रह्मभावापत्तिः ॥ ७६६ ॥

**कोशः**—शब्दार्थप्रतिपादकः १ शब्दार्थनिर्वचनपरिज्ञानं वा २ * असिकोशवदात्माच्छादकत्वं कोशत्वम् ३ स अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयभेदात्पञ्चविधः ल०त० शं० [२४-४९ पृष्ठे] द्र०

**कौपीनम्**—पुरुषलिङ्गावरको वस्त्रखण्डः १ कुत्सितस्य पीनस्य मांसस्यावरणं वा २ एकहस्तप्रविस्तारं करद्वन्द्वसमायतम्, विलम्बिततृतीयांशं गुह्याच्छादनमीरितमिति **सिद्धान्तशेखरे** ॥ ७७३ ॥

**क्रमः**—चिन्त्यमानार्थसम्प्राप्तिः १ * पौर्वापर्यरूप इति मी० २ पूर्वापरावस्थानम् ३ सामर्थ्यहेतुकव्यापारः।

**क्रिया**—करणव्यापारनिष्पाद्या १ संयोगविभागयोरसाधारणो हेतुर्वा ॥ ७७९ ॥

**क्रीडा**—बाह्यसाधनसापेक्षा ॥ ७८० ॥

**क्रोधः**—परानिष्टाभिलाषः १ अनिष्टविषयद्वेषहेतुको वा २ कामितार्थविघातजन्यो बुद्धिक्षोभ इति ग्रं० ३ आत्मनः प्रतिकूलेषु दुःखेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा तत्तद्दोषानुसंधानाध्यासेन यः प्रज्वलनात्मको मन्युः स इति **मधुसूदन्याम्** ॥ ७८४ ॥

**क्रोधनिवृत्त्युपायः**—दययाऽहिंसया क्षमया वा क्रोधस्य निवृत्तिः ॥ ७८५ ॥

**क्लेशः**—बाधनालक्षणः १ अविद्याद्यन्यतमत्वं क्लेशत्वम्

**क्षणः**—निमेषक्रियावच्छिन्नस्य कालस्य चतुर्थो भाग इति यो० १ स्वाधेयपदार्थप्रागभावानाधारः समय इति **बौद्धाधिकारे** ॥ ७८९ ॥

**क्षणिकत्वम्**—स्वाधिकरणसमयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वे सति कादाचित्कत्वम् १ स्वाधिकरणसमयप्रागभावाधिकरणक्षणावृत्तित्वमिति तु ज्यायः, इति बौ० रघुनाथः २ तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । घटादिव्यावृत्तये **तृतीयक्षणवृत्ती**ति गदाधरः ३ तृतीयक्षणवृत्त्यवृत्तिजातिमद्विशेषगुणवत्त्वमिति ग्रं० ४ क्षणान्तरासंबन्धित्वे सति क्षणसम्बन्धित्वम् ५ क्षणान्तरसंबन्धित्वात्यन्ताभावाधिकरणत्वे सति क्षणसंबन्धित्वं वा ६ उत्पत्तिक्षणानंतरक्षणवर्त्तिध्वंसप्रतियोगित्वमिति केचित् ।

**क्षत्रियविशोर्विद्वत्संन्यासः**—अपरोक्षात्मविद्विहितत्वे सति ससाधनवैधाखिलकर्मसु निष्फलत्वबुद्धिदार्ढ्येन तदास्थाराहित्यम् ॥ ७९७ ॥

**क्षमा**—आक्रुष्टस्य ताडितस्य वाऽविकृतचित्तता १

सत्यपि सामर्थ्ये परिभवहेतुं प्रतिक्रोधस्यानुत्पत्तिर्वा २ आक्रुष्टोऽभिहतो यस्तु नाक्रोशेन्न हनेदपि, अदुष्टैर्वाङ्मनःकायैस्तितिक्षुश्च क्षमा स्मृता।

**क्षयतापः**—पुण्यकर्मक्षये पतनभीतिजन्यस्तापः ८०१

**क्षेपकः**—विक्षेपकर्तरि ग्रन्थकृदकृतांशस्य तद्ग्रन्थमध्ये सन्निवेशकः ॥ ८०२ ॥

**क्षेमः**—स्थितरक्षणम् १ लब्धप्रतिपालनं वा ॥८०४॥

## ख

**खण्डनम्**—शब्दार्थानिर्वचनीयताप्रतिपादकम् १ परमतपदार्थनिराकरणत्वे सति स्वमतदोषपरिहारः।

**खण्डप्रलयः**—जन्यद्रव्यानधिकरणकालः ॥८०८॥

**खानपानम्**—कठिनद्रवद्रव्ययोर्गलाधःकरणम् ८०९

**खिलकाण्डत्वम्**—कर्मोपासनब्रह्मकाण्डेषु त्रिष्वपि यद्यद्वक्तव्यमवशिष्टं तस्य सर्वस्याभिधानेन प्रकीर्णत्वमिति तै०आ०सा०भाष्ये ॥ ८१० ॥

**ख्यातिः**—भ्रमज्ञानम् १ सा पञ्चधा—आत्मख्यातिरसत्ख्यातिरख्यातिरन्यथाख्यातिरनिर्वचनीयख्यातिश्चेति ल०त०श० [ ८-१८-२५-४२-४७ पृष्ठे ] द्र०।

## ग

**गन्धः**—घ्राणग्राह्यो गुणः । गन्धत्वादावतिव्याप्तिवारणाय **गुण** इति, रूपादावतिव्याप्तिवारणाय **घ्राणग्राह्य** इति [१] पृथिवीवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं गन्धत्वम् ॥ ८१४ ॥

**गमनम्**—अनियतोत्तरदेशसंयोगासमवायिकारणं कर्म ।

**गर्वः**—अभिमानात्मिका चित्तवृत्तिः ॥ ८१६ ॥

**गाथा**—सुभाषितत्वेन सर्वैर्गीयमाना ॥ ८१७ ॥

**गीतम्**—स्वरतालग्रामभेदरागरागाङ्गभूषितम्, संस्कृतं वा प्राकृतं वा गीतं गीतविदो विदुः ॥ ८२० ॥

**गुणः**—द्रव्यकर्मभिन्नत्वे सति सामान्यवान् । द्रव्यकर्मणोरतिव्याप्तिवारणाय विशेषणदलम्, सामान्यादावतिव्याप्तिवारणाय विशेष्यदलम् २ निर्गुणत्वे निष्क्रियत्वे च सति सामान्यवानिति **किरणावल्याम्** ३ संयोगाजन्यसंयोगासमवायिकारणवृत्तिस-

---

१ घ्राणभिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति घ्राणजन्यप्रत्यक्षविषयत्वमित्यर्थः ।

योगासमानाधिकरणजातिमानिति शिवादित्यमिश्रः ४ नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं गुणत्वमिति **गौतमसूत्रवृत्तौ** ॥ ८२५ ॥

**गुणवादः**—प्रमाणान्तरविरोधे सत्यर्थवादः १ मानान्तरविरुद्धार्थ(ज्ञापकः शब्दः २)प्रतिपादकत्वं गुणवादत्वम्, यथा **आदित्यो यूप** इत्यादिः ॥ ८२८ ॥

**गुणोपसंहारः**—भिन्नशाखागतानां गुणानामङ्गानां विशेषणानां वा एकबुद्ध्युपारोहणमित्यात्**मपुराणटिप्पण्याम्** ॥ ८२९ ॥

**गुरुत्वम्**—हितोपदेष्टृत्वम् १ संशयापनोदकत्वं वा २ गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः, अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ३ * आद्यपतनासमवायिकारणम् । दण्डादिवारणायासमवा**यी**ति, रूपादिवारणाय **पतने**ति, वेगेऽतिव्याप्तिवारणायाद्येति ॥ ८३३ ॥

---

१ **आद्यत्वम्**—स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालिकत्वम् । २ पतनं नाम अधःसंयोगानुकूलक्रिया ।

**गृहस्थाश्रमः**—वैवाहिकेन विधिना कृतपत्नीपरिग्रहः ( श्रौतस्मार्तकर्मानुष्ठानपरः ) १ स चतुर्विधः, वार्ताको यायावरः शालीनो घोरसंन्यासिकश्चेति ।

**गोचरः**—ज्ञाननिरूपितो विषयः ८३५ [ त्वम्

**गोत्वम्**—गवेतरावृत्तित्वे सति सकलगोव्यक्तिवृत्ति-

**गोत्रम्**—पुत्रपौत्रप्रभृतिकमपत्यम् ॥ ८३७ ॥

**गौणप्रयोजनत्वम्**—अन्येच्छाधीनेच्छाविषयत्वमिति **मुक्तिवादे** गदाधरः ॥ ८३८ ॥

**गौणीवृत्तिः**—गुणमधिकृत्य प्रवृत्ता १ लक्ष्यमाण-गुणयोगेन स्वार्थादन्यत्र वृत्तिर्वा, यथा सिंहो माण-वक इत्यादौ ॥ ८४० ॥ [दायः ८४१

**ग्रन्थः**—अलौकिकैकप्रयोजनोद्देशेन प्रवृत्तवाक्यसमु-

**ग्रहणम्**—शिष्यकृतप्रश्नाक्षेपवाक्यार्थानां सद्योऽव-धारणसामर्थ्यम् ॥ ८४२ ॥

**ग्रामः**—हट्टादिशून्यवसतीति **श्रीधरः** १ विप्रादि-वर्णप्राया प्राकारपरिखादिरहिता बहुजनवसतीति **भरतः** ॥ ८४४ ॥

**ग्राह्यत्वम्**—लौकिकप्रत्यक्षस्वरूपयोग्यत्वम् ॥ ८४५॥

**घ**

**घटत्वम्**—स्वाश्रयघटभिन्नाधिकरणावृत्तिर्जातिः ८४६

**घटकत्वम्**—प्रत्येकविषयताव्यापकविषयतानिरूपक-
त्वम् ॥ ८४७ ॥    [ त्वम् ॥ ८४८ ॥

**घटितत्वम्**—समुदायविषयताव्याप्यविषयतानिरूपक-

**घ्राणम्**—गन्धोपलब्धिसाधनमिन्द्रियम् । चक्षुरादा-
वतिव्याप्तिवारणाय **गन्धोपलब्धीति**, कालादाव-
तिव्याप्तिवारणायेन्द्रियमिति ॥ ८४९ ॥

**च**

**चक्रक**दोषः / त्वम् } त्रितयादिसिद्धावव्यवधानेन त्रितयाद्य-
पेक्षा १ पूर्वस्य पूर्वापेक्षितमध्यमापेक्षि-
तोत्तरापेक्षितत्वम् २ स्वापेक्षणीयापेक्षितसापेक्षत्व-
निबन्धनप्रसङ्गत्वमिति तर्कशास्त्रे ३ स्वग्रहसापेक्ष-
ग्रहसापेक्षग्रहसापेक्षग्रहकत्वमिति वे० ॥ ८५३ ॥

**चक्षुः**—रूपोपलब्धिसाधनमिन्द्रियम् ॥ ८५४ ॥

**चरमत्वम्**—स्वसजातीय(पदार्थप्रागभावा०) शरीर-प्रागभावानधिकरणत्वम् ॥ ८५६ ॥

**चान्द्रायणविधिः**—एकैकं वर्द्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत्, इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिरिति **वसिष्ठस्मृतौ** ॥ ८५७ ॥   [त्वम्

**चार्वाकत्वम्**—बृहस्पतिशिष्यत्वे सति देहात्मवादि-

**चिकित्सा**—व्याधिनिवारणो व्यापारः ॥ ८५९ ॥

**चिकीर्षा**—सम्पादनेच्छा १ प्रवृत्तिहेतुरिच्छा वा।

**चित्तम्**—अनुसन्धानात्मकवृत्तिमदन्तःकरणम् ८६२

**चिदाभासः**—चित्प्रतिबिम्बः १ चिल्लक्षणरहितत्वे सति चिद्वद्भासमानत्वम् ॥ ८६४ ॥

**चेष्टा**—हिताहितप्राप्तिपरिहारार्था क्रिया १ शरीरतद-वयवसमवेता या काचिद्विशिष्टा क्रिया इति ग्रं०।

## छ

**छन्दः**—नियताक्षरवर्णमात्रादिप्रतिपादकग्रन्थः १ लौ-किकवैदिकशब्दान् छन्दयति नियमयति प्रतिपादय-

ति विरामादिव्यवस्थापको ग्रन्थ इति पु० २ वेदाङ्गत्वे सति छन्दसो(=वेद) व्याख्यानत्वं छन्दस्त्वम् ८६९

**छलम्**—विपरीतार्थकल्पनोपपत्त्या वचनविघातः १ वक्तृतात्पर्याविषयार्थकल्पनेन दूषणाभिधानम्, यथा नवकंबलोऽयं देवदत्त इति **गौ० ब्रू०** २ शब्दवृत्तिव्यत्ययेन प्रतिषेधहेतुरिति **सर्वदर्श०** ॥ ८७२ ॥

## ज

**जटः**—अपरिच्छिन्नासभ्यवदनपर इति **मैत्र्युपनिषत्** टीकायां रामतीर्थः ॥ ८७३ ॥

**जडः**—वेदग्रहणासमर्थः १ * अस्वप्रकाशत्वं जडत्वम्

**जनकत्वम्**—अनन्यथासिद्धत्वे सति नियतपूर्ववृत्तित्वम्

**जन्म** } **जननं** } आत्मनि देहसंबन्धः १ आद्यशरीरप्राणसंयोगो वेति नै० २ अपूर्वशरीरेन्द्रियादिसंबन्धः ३ स्वादृष्टोपनिबद्धशरीरग्रहणं वेति वे० ४ निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसंबन्ध इति सां० ॥ ८८१ ॥

**जयः**—शत्रुपराङ्मुखीकरणम् ॥ ८२२ ॥

**जल्पः**—उभयपक्षस्थापनवती विजिगीषु(णा)कथा १ परमतनिराकरणत्वे सति स्वमतस्थापनरूपा विजिगीषोः कथेति ग्रं० ॥ ८८४ ॥

**जहदजहल्लक्षणा**—वाच्यार्थैकदेशत्यागेनैकदेशवृत्तिः।

**जहल्लक्षणा**—शक्यार्थमनन्तर्भाव्यत्वे सत्यर्थान्तरप्रतीतिः, यथा विषं भुंक्ष्वेत्यत्र स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिरिति धर्मराजमते १ शक्यमात्रपरित्यागेन तत्संबन्ध्यर्थान्तरे वृत्तिः, यथा गङ्गायां घोष इति गङ्गापदस्य तीरे। अजहल्लक्षणायामतिव्याप्तिवारणाय **शक्यमात्रपरित्यागेने**तीति साम्प्रदायिकाः २ लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा इति नै० ॥ ८८८ ॥

**जाग्रज्जाग्रत्**—प्रमाज्ञानत्वम् ॥ ८८९ ॥

**जाग्रत्सुषुप्तिः**—जाग्रदवस्थायां श्रमादिना स्तब्धीभावः

**जाग्रत्स्वप्नः**—शुक्तिरजतादिभ्रमः ॥ ८९१ ॥

जाग्रदवस्था } इन्द्रियजन्यान्तःकरणवृत्त्यवस्था १
जागरितम् } यद्वा दिगाद्यधिष्ठातृदेवतानुगृहीतैरि-
न्द्रियैः शब्दादिविषयानुभवावस्था । स्वप्नेऽतिव्या-
प्तिव्यावृत्त्यर्थं **दिगादी**त्युक्तम्, सुषुप्तावतिव्या-
प्तिव्यावृत्त्यर्थमुक्तं **शब्दादी**ति २ इन्द्रियैरर्थोप-
लब्धिः । सुषुप्तिव्यावृत्त्यर्थमर्थपदम्, स्वप्नं निरासि-
तुमिन्द्रियविशेषणम् ३ सा त्रिधा जाग्रज्जाग्र-
ज्जाग्रत्स्वप्नो जाग्रत्सुषुप्तिश्चेति ॥ ८९४ ॥

**जातिः**—अनुगतबुद्धिव्यवहारहेतुभूता[1] १ अनिर्वच-
नीयबहुपदार्थघटितधर्मान्यतरधर्मरूपोपाधिभिन्नत्वे
सति नित्यत्वे सत्यनेकव्यक्तिवृत्तिधर्मत्वं जातित्वम्।
घटादौ व्यभिचारनिरासाय **नित्यत्वे सती**त्युक्तम्,
अखण्डोपाधिरूपाभावत्वादौ व्यभिचारनिरासायो-
**पाधिभिन्नत्वे सती**ति, जलपरमाणुरूपादौ व्यभि-

---

१ अनुगतबुद्धिव्यवहारहेतुभूतं परसामान्यं सत्तेत्या-
ख्यायते ।

चारनिवृत्तयेऽनेकव्यक्तिवृत्तित्वमिति **मणिप्रभा**याम् २ मनस्त्वात्मत्वातिरिक्तनित्यमात्रसमवेतान्यत्वे सति समवेतसत्तानाश्रय इति शिवादित्यमिश्रः।

**जात्युत्तरम्**—स्वव्याघातकमुत्तरम् १ असदुत्तरं वा २ सन्दर्भेण दूषणासमर्थं वा ३ छलादिभिन्नदूषणासमर्थमुत्तरं वा ॥ ९०१ ॥

**जिज्ञासा**—ज्ञातुमिच्छा १ अज्ञातादिबुद्धिसिद्धये प्रवर्त्तिका इच्छा वा ॥ ९०२ ॥

**जिज्ञासुः**—ज्ञातुमिच्छुः १ आत्मज्ञानार्थी मुमुक्षुः।

**जितेन्द्रियः**—श्रुत्वा स्पृष्ट्वाथ दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः, न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ ९०६ ॥

**जीवः**—सुखादिसमवायिकारणमिति न्या० १ अविद्योपहितं चैतन्यम् २ अविद्यावच्छिन्नं वा ३ अविद्याप्रतिबिम्बितं वा ४ चैतन्यं वा ५ यद्वा अन्तःकरणोपहितम् ६ अन्तःकरणावच्छिन्नं वा ७ अन्तःकरणप्रतिबिम्बितं वा ८ चैतन्यं वा जीवः ९ मतान्तरे व्यष्टि-

स्थूलसूक्ष्मकारणशरीरत्रयोपहितः १० स च विश्वतैजसप्राज्ञभेदात्त्रिविधः ल० [ ९७ पृष्ठे ] द्र० ९१६

**जीवनम्**—प्राणधारणानुकूलो व्यापारः ॥ ९१७ ॥

**जीवन्मुक्तः**—स्वस्वरूपज्ञानेनाज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादौ बाधिते सत्यखिलबन्धरहितः १ स्वस्मिन्स्वदृष्ट्याऽध्यासाप्रतिभासे सति यावत्प्रारब्धं बाधितचित्तादिमत्त्वं जीवन्मुक्तत्वम् २ स्वतः परतश्च व्युत्थानाव्युत्थानरूपपञ्चमीषष्ठ्यादिभूमिकावत्त्वम् ॥ ९२० ॥

**जीवन्मुक्तिः**—स्वस्मिन्स्वदृशा सतताध्यासाप्रतिभासे सति यावत्प्रारब्धं स्वचित्ताद्यवस्थितिः। अज्ञसमाधौ लोकदृष्ट्याऽध्यासाप्रतिभासे सत्येव चित्ताद्यवस्थितिरस्तीति तत्रातिव्याप्तिवारणाय **स्वस्मिन्स्वदृशेति**, तत्त्वज्ञानोत्तरक्षणिकवृत्त्यभावे व्यभिचारवारणाय **सततेति** पदम्, **स्वपदमादिपदं** च क्रमात्कस्यचिज्जीवन्मुक्तिसत्त्वे कस्मिंश्चिदज्ञे यावत्प्रारब्धं चित्ताद्यवस्थितिसत्त्वात्तत्रातिव्याप्तिस्तथा-

व्युत्थितस्थितप्रज्ञे चक्षुरादिसत्त्वात्तत्राव्याप्तिरिति तयोर्व्यावृत्त्यै इति जी०वे० टी० १ श्रवणादिभिरुत्पन्नसाक्षात्कारस्य विद्वत्संन्यासिनः कर्तृत्वाद्यखिलबन्धप्रतिभासनिवृत्तिरित्यद्वैतकौ० ॥ ९२२ ॥

**जीवाश्रया प्रमा**—अनधिगताबाधितविषयाकारान्तःकरणवृत्तिप्रतिबिम्बिता चित्। भ्रान्तिज्ञानेऽतिव्याप्तिवारणायाबाधितेति, स्मृतावतिव्याप्तिरत उक्तमनधिगते ॥ ९२३ ॥ [ यत्वं वा

**ज्ञातत्वम्**—ज्ञानभास्यत्वम् १ ज्ञाननिवर्त्याज्ञानाविष-

**ज्ञाता**—विषयचैतन्याभिव्यञ्जकान्तःकरणाज्ञानयोः परिणामात्मकवृत्त्युपहितं चैतन्यम् ॥ ९२६ ॥

**ज्ञानगत** अपरोक्षम् प्रत्यक्षम्— } तत्तद्व्यवहारानुकूलचैतन्यस्य तत्तदर्थाभेदः १ अपरोक्षार्थगोचरव्यवहारजनकत्वयोग्यज्ञानत्वं ज्ञानगतप्रत्यक्षत्वमित्यद्वैतविद्याचार्यः २ स्वाविषयविषयकज्ञानाजन्य-

---

१ जीवदवस्थायामिति शेषः, अन्यथा विदेहमुक्तावतिव्याप्तेः। २ कर्तृत्वम्—कायिकादिचेष्टानुष्ठातृत्वम्।

ज्ञानत्वम् । विशेषणज्ञानजन्यविशिष्टज्ञानेऽव्याप्तिवारणाय **स्वाविषयविषयकेति** **ब्रह्मविद्याभरणे** ३ अयोग्यप्रमाणाजन्यत्वे सति वर्तमानयोग्यविषयचैतन्याभिन्नत्वमिति म० ॥ ९३० ॥

**ज्ञानम्**—विषयचैतन्याभिव्यञ्जकान्तःकरणाज्ञानयोः परिणामरूपा वृत्तिः १ प्रत्यगात्मनि देहाद्यतिरिक्तत्वप्रकारको, देहादौ वा प्रत्यगात्मातिरिक्तत्वप्रकारको निश्चयः २ जीवब्रह्मणोरभेदनिश्चय इति ग्रं० ४ अर्थप्रकाशत्वं ज्ञानत्वम् ५ ज्ञायतेऽनेनेति करणव्युत्पत्त्या वृत्तिर्ज्ञानम्, ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्या संविज्ज्ञानम् । तद्द्विविधं परोक्षमपरोक्षञ्चेति । प्रकारान्तरे संशयधारावाहिककार्याहार्यस्मृतिभेदात्पञ्चविधम् । शालग्रामे विधिना विष्णुत्वधीः कार्यं ज्ञानं शेषं त०श० [ २८-५३ पृष्ठे ] द्रष्टव्यम्।

**ज्ञानदण्डत्वम्**—अज्ञानतत्कार्यदमनहेतुत्वम् ॥९३६॥

**ज्ञाननिवर्त्यत्वम्**—ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वम् ॥ ९३७ ॥

**ज्ञानफलम्**—वर्तमानलिङ्गदेहनिवृत्तिः १ भाविजन्मानारम्भो वा २ अविद्यानिवृत्तिरिति म०॥ ९४० ॥

**ज्ञानलक्षणसन्निकर्षः**—स्वविषयविषयकप्रत्यक्षजनको ज्ञानविशेषः ॥ ९४१ ॥

**ज्ञानात्मा**—ज्ञातृत्वोपाध्यहङ्काराविच्छिन्नं चैतन्यम् ।

**ज्ञानाध्यासः**—अतस्मिँस्तद्बुद्धिः, यथा शुक्तौ रजतबुद्धिर्यथा वाऽऽत्मन्यनात्मबुद्धिः ॥ ९४३ ॥

**ज्ञानेन्द्रियम्**—ज्ञानकरणमिन्द्रियम् १ अपञ्चीकृतपञ्चमहाभूतकार्यत्वे सति शब्दाद्युपलब्धिसाधनमिति वे० २ सात्त्विकाहङ्कारकार्यत्वे सति रूपादिविषयालोचनकरणम्। रूपाद्यालोचनकरणत्वमालोकेऽतिप्रसक्तं तद्वारणाय **सात्त्विकाहङ्कारकार्यत्वे सती**ति साङ्ख्याः ॥ ९४६ ॥

**ज्योतिषम्**—सूर्यादिगत्यादिकप्रतिपादको ग्रन्थः १ वेदाङ्गत्वे सति सूर्यादिग्रहगत्यादिकालज्ञानसाधनमिति **बृहदभिधाने** ॥ ९५१ ॥

ट

**टिप्पणी**—मूलटीकान्यतरव्याख्यारूपा ॥ ९५२ ॥

**टीका**—विषमपदव्याख्यारूपा ॥ ९५३ ॥

त

**तटस्थः**—वादिप्रतिवादिभावाऽनापन्नः ॥ ९५४ ॥

**तटस्थत्वम्**—तद्भिन्नत्वे सति तद्बोधकत्वम् ॥९५५॥

**तटस्थलक्षणत्वम्**—कादाचित्कत्वे सति व्यावर्तकत्वम्, यथा देवदत्तस्य तिलकादिकम् १ यावल्लक्ष्यकालमनवस्थितत्वे सति व्यावर्तकत्वं वा। स्वरूपलक्षणेऽतिव्याप्तिवारणाय सत्यन्तम्, लक्ष्यावृत्तितादृशधर्मेऽतिव्याप्तिवारणाय **व्यावर्तत्वमिति**।

**तत्त्वज्ञानम्**—इदं सर्वं द्वैतजातमद्वितीये चिदानन्दात्मनि मायया कल्पितत्वान्मृषैव आत्मैवैकः परमार्थसत्यः सच्चिदानन्दाद्वयोऽहमस्मीति ज्ञानम् १ तत्त्वं पदार्थयोरभेदगोचारान्तःकरणवृत्तिरिति म०।

**तत्त्वं पदार्थशोधनम्**—यद्यद्व्यावृत्तं तत्तदनात्मा यदन्वयि तदात्मेति निश्चयः ॥ ९६१ ॥

**तनुमानसाभूमिका**—निदिध्यासनाभ्यासेन मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यता ॥ ९६२ ॥

**तनुव्यसनम्**—शरीरपुष्ट्याद्यर्थं रसायनभक्षणादीच्छाहेतुर्व्यसनम् ॥ ९६३ ॥

**तन्त्रत्वम्**—सकृदुच्चरितत्वे सत्यनेकार्थबोधकत्वम् ।

**तपः**—शास्त्रीयमार्गेण कायेन्द्रियशोषणम् १ मनसश्चेन्द्रियाणाञ्चैकाग्र्यं वा २ अन्तर्मुखानि यदि खानि तप(सा)स्ततः किं, नान्तर्मुखानि यदि खानि तप(सा)स्ततः किम्, अन्तर्बहिर्यदि हरिश्च तपस्ततः किं, नान्तर्बहिर्यदि हरिश्च तपस्ततः किम् ॥ ९६६ ॥

**तमः**—स्पर्शरहितत्वे सति रूपवत् । आकाशादिवारणाय रूपवदिति, पृथिव्यादिवारणाय सत्यन्तम् ।

**तमोगुणत्वम्**—गुरुत्वे सति आवरकत्वे सति मोहकत्वम् ॥ ९६८ ॥

**तर्कः**—अनिष्ट(आपादनम् १)प्रसञ्जकः २ व्याप्यारोपेण व्यापकारोपो वा, यथा यदि पर्वते वह्निर्न स्यात्तर्हि धूमोऽपि न स्यात् ॥ ९६८ ॥

**तात्पर्यम्**—वक्तुरिच्छा १ स्वार्थसंसर्गानुभवजननस्वरूपयोग्यत्वं तात्पर्यत्वम् २ तत्प्रतीतिजनन( अनुकूलवृत्तिमत्त्वम् ३ ) योग्यत्वे सति तदितरप्रतीतीच्छयानुच्चरितत्वं वा ४ तच्च वक्तृतात्पर्यशब्दतात्पर्यभेदेन द्विविधं ल०त०श० द्रश्यम् ॥ ९७४ ॥

**तात्पर्यानुपपत्तिः**—मुख्यार्थप्रत्यायने सति तात्पर्यस्यानुपपन्नत्वम् ॥ ९७५ ॥

**तादात्म्यम्**—भेदसहिष्णुरभेदत्वमिति केचित् १तद्भिन्नत्वे सति तद( भेदेन प्रतीयमानत्वम् २)भिन्नसत्ताकत्वमिति **तत्त्वानुसन्धाने** ॥ ९७८ ॥

**तापः**—प्रतिकूलवेदनीयः, स आध्यात्मिकाधिभौतिकाधिदैविकभेदात्त्रिविधः ल० श० [४९ पृष्ठे] द्र०

तामिस्रः } द्वेषः— } दुःखसाधने विद्यमानेऽपि किमपि दुःखं मे माभूदिति विपर्ययविशेषः ॥ ९८० ॥

**तितिक्षा**—शीतोष्णादिद्वन्द्वसहिष्णुता ॥ ९८१ ॥

**तीव्रवैराग्यम्**—अस्मिन् जन्मनि पुत्रदारादिमास्विति स्थिरबुद्ध्या विषयजिहासा ॥ ९८२ ॥

**तीव्रतरवैराग्यम्**-पुनरावृत्तिसहितं ब्रह्मलोकादिपर्यन्तं मास्त्विति स्थिरबुद्ध्या विषयजिहासेति कैलासपर्वतः

**तुरीया/तुर्य्याऽवस्था**—ब्रह्मध्यानावस्थस्य पुनः पदार्थान्तराऽपरिस्फूर्तिः ॥ ९८४ ॥

**तुल्यत्वम्**—स्वभिन्नजातिसमनियतत्वम् ॥ ९८५ ॥

**तुल्यबलविरोधः**—अन्यत्रान्यत्र लब्धावकाशयोरेकत्र युगपत्प्राप्तिः ॥ ९८६ ॥

**तुष्टिः**—भोग्येष्वेतावताऽलमिति बुद्धिः १ अधिगतार्थादन्यत्र तुच्छत्वबुद्धिर्वा ॥ ९८८ ॥

**तूलाऽविद्या/कार्य्याविद्या**—उपाध्यवच्छिन्नचैतन्याच्छादिकाऽविद्या। सा चतुर्विधा, अनित्ये ब्रह्मलोकादिफले नित्यत्वबुद्धिरेका, अशुचौ पुत्रभार्यादिशरीरे शुचित्वबुद्धिर्द्वितीया, दुःखे तत्साधने च स्रक्चन्दनवनितादौ सुखतत्साधनबुद्धिस्तृतीया, गौणमिथ्यात्मनि पुत्रभार्यादावन्नमयादिकेऽनात्मनि मुख्यात्मत्वभ्रान्तिश्चतुर्थी ॥ ९८९ ॥

तृष्णा–प्राप्यमाणेष्वप्यर्थेष्वतृप्तिः १ यावदीप्सित-द्रव्यप्राप्तौ सत्यामपि पुनस्ततोऽधिकद्रव्याकाङ्क्षा वा

तेजः–उष्णस्पर्शवत् १ चन्द्रचामीकरसमवेतत्वे सति ज्वलनसमवेतं सामान्यं वा २ * स्त्रीबाल-कादिभिर्मूढैरनाभिभाव्यत्वम् ९९५ [न्यम्।

तैजसजीवः–व्यष्टिसूक्ष्मकारणशरीरद्वयोपाहितं चैत-

त्यागः–स्वत्वध्वंसानुकूलव्यापारः ॥ ९९७ ॥

त्रसरेणुः– } परमाणुषट्कात्मकत्वे सति द्व्यणुकत्रयात्म-
त्र्यणुकम् } करजः ॥ ९९८ ॥

त्रिपुटी–त्रयाणां पुटानां ज्ञानप्रकाराणां समाहारः।

त्रिवृत्करणम्–त्रीणि भूतानि द्विधा विदार्य प्रति-भूतमेकैकमर्द्धं द्विधा प्रस्फोट्येतरभूतद्वये योजनम्

त्रुटी–अवयवादिहीनता ॥ १००१ ॥

त्वक्–स्पर्शोपलब्धिसाधनमिन्द्रियम् ॥ १००२ ॥

## द

दमः–बाह्येन्द्रियनिग्रहः १ नित्यनैमित्तिककर्माति-रिक्तानां व्यापाराणां बाह्येन्द्रियनिग्रह इति गूढा-

र्थतत्त्वालोके २ अन्ये ब्रह्मज्ञानोपयोगिव्यापारा-
तिरिक्तबाह्येन्द्रियव्यापारमात्रनिरोधः ॥१००७॥

**दम्भः**—वेषभाषाक्रियाचातुर्यादिभिः स्वमहत्त्वप्रकट-
नम् १ परेषामग्रे स्वधर्मजपध्यानादीनां पूजाख्या-
तिलाभार्थं प्रकटीकरणं वा २ अधार्मिकत्वे सति
धार्मिकत्वख्यापनेच्छा वा ॥ १०१० ॥

**दया**—दुःखिनं प्रत्यनुजिघृक्षा १ दुःखितेषु भूतेषु
( अनुकम्पा ) कृपा वा ॥ १०१२ ॥

**दर्पः**—भर्त्सनादिषु दृढबुद्धिः १ धनस्वजनविद्यादि-
निमित्तश्चित्तस्योत्सेको वा ॥ १०१४ ॥

**दर्शनम्**—विचारप्रयोजकं ज्ञानम् १ यथार्थतया ज्ञायते
पदार्थोऽनेनेति ॥ १०१७ ॥

**दानम्**—स्वस्वत्वत्यागानुकूलव्यापारः १ गोहिर-
ण्यादीनां स्वकीयानां मूल्यग्रहणं विना शास्त्रो-
क्तवर्त्मना स्वस्वत्वपरित्यागपरस्वत्वापादनत्याग-
त्वमिति **दिनकर्याम्** ॥ १०१९ ॥

**दार्ष्टान्तिकम्**—दृष्टान्तयुक्तम् ॥ १०२० ॥

दिक्—अकालत्वे सत्यविशेषगुणा महती १ प्राच्यादिव्यवहारासाधारणहेतुः। आकाशादिवारणायासाधारणेति ग्रं० ॥ १०२२ ॥

दिनम्—सूर्यकिरणावच्छिन्नकालः ॥ १०२३ ॥

दीक्षा—गुरुमुखात्स्वेष्टदेवमन्त्रग्रहणम् ॥ १०२४ ॥

दुःखम्—सर्वेषां प्रतिकूलतया वेदनीयम् १ इतरद्वेषानधीनद्वेषविषयो वा। सर्पादावतिव्याप्तिवारणायेतरद्वेषानधीनेति द्वेषविशेषणम् २ द्विष्टसाधनताविषयकजन्यज्ञानाजन्यद्वेषविषयगुण इति न्या०।

दूषणम्—दोपजनकम् ॥ १०३० ॥

दूषितम्—दूषणयुक्तम् ॥ १०३१ ॥

दृश्यत्वम्—भानभास्यत्वम् १ चिद्विषयत्वं वा २ फलविषयत्वं वा ३ वृत्तिप्रतिफलितचिद्विषयत्वं वेति पु० ४ सत्तादात्म्यप्रकारकप्रमाविषयत्वम् ५ स्वसमसत्ताकज्ञानविषयत्वं वेति ग्रं० ॥१०३७॥

दृष्टकूटत्वम्—अन्यार्थत्वे सत्यन्यार्थबोधकत्वम्, यथा पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः, भ्रमँश्च

वायुवेगेन पदमेकं न गच्छति 'कुलालचक्रम्'।
पञ्चभर्त्री न पाञ्चाली द्विजिह्वा न च सर्पिणी,
श्यामास्या न च मार्जारी यो जानाति स पण्डितः
'लेखनी' ॥ १०३८ ॥

दृष्टान्तः—वादिप्रतिवादि(निर्णीतोर्थः १)भ्यां संमतोऽर्थः, यथा महानसम् २ वादिप्रतिवादिनोः साध्यसाधनोभयप्रकारकतदभावद्वयप्रकारकान्यतरनिश्चयविषयो वा ३ लौकिकपरीक्षकाणां यत्रार्थे बुद्धिसाम्यं सः ४ निश्चितसाध्यकत्वं दृष्टान्तत्वम्।

दृष्टार्थापत्तिः—अनुपपद्यमानदृष्टार्थज्ञानात्तदुपपादकोभूतार्थान्तरकल्पनम्, यथा दिवाऽभोजि देवदत्ते रात्रिभोजनमन्तरानुपपद्यमानपीनत्वदर्शनात्तदुपपाददकीभूतस्यार्थान्तरस्य (=रात्रिभोजनस्य) कल्पनम् १ शुक्तिरजतादिनिष्ठनिषिद्ध्यमानत्वादिरूपार्थाभावव्यापकमिथ्यात्वाद्यभावप्रतियोग्यर्थविषयकज्ञानत्वं दृष्टार्थापत्तित्वम् ॥ १०४९ ॥

दृष्टिः—चक्षुर्द्वारा रूपोपलब्धिहेतुर्मनोवृत्तिः १ दृष्टि

ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत्, सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥ १०४६ ॥

दृष्टिसृष्टिः—दृष्टिसमसमया विश्वसृष्टिः १ दृष्टिसमानकालीनसृष्टिर्वा २ दृष्टिरेव विश्वसृष्टिर्वा ३ त्रिविधसत्ताबहिर्भूतत्वे सत्यसद्विलक्षणत्वं दृष्टिसृष्टित्वमित्यद्वैतसिद्धौ ॥ १०५० ॥

देवताधिकरणम्-यज्ञादावधिकारित्वतदभावयोरन्यतरसाधको न्यायः ॥ १०५२ ॥

देवयानमार्गः-अर्चिराद्यभिमानिदेवाधिष्ठितो मार्गः १ नागवीथ्युत्तरे यच्च सप्तर्षिभ्यश्च दक्षिणम्, उत्तरः सवितुः पन्था देवयानस्तु स स्मृतः २ देवः परेशो यायतेऽनेन मार्गेण ॥ १०५५ ॥

देशपरिच्छेदः-यत्किञ्चिद्देशावृत्तित्वम् १ अत्यन्ताभावप्रतियोगित्वं वा २ अधिकरणैकदेशवर्त्तित्वे सति सर्वाव्यापित्वम्, यथा संयोगादिरिति ग्रं० ।

---

१ दृष्टिः दर्शनं स्वप्रकाशज्ञानस्वरूपमित्यर्थः ।

**देशान्तरम्**—महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः, वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते॥१०५९॥

**देहः**—प्रतिक्षणमुपचीयमानावयवः १ इन्द्रियाश्रयो वा

**देहवासना**—देहानुभवजनितत्वे सति देहस्यैव पुनः पुनः( पुष्ट्याद्यर्थम् )स्मरणहेतुः । सा त्रिविधा—आत्मत्वभ्रान्तिर्गुणाधानत्वभ्रान्तिर्दोषापनयत्वभ्रान्तिश्चेति । गुणाधानं दोषापनयनञ्च द्विविधं लौकिकं शास्त्रीयञ्चेति । अप्रमाणिकत्वादशक्यत्वात्पुरुषार्थानुपयोगित्वात्पुनर्जन्महेतुत्वाच्च समस्तदेहवासना मलिना ॥ १०६३ ॥

**देहाध्यासः**—देहस्य तद्धर्मस्य वाऽऽत्मतया तद्धर्मतया वाऽध्यासः ॥ १०६४ ॥

**दैनिक / दैनंदिन प्रलयः**—ब्रह्मणः सुषुप्तिः १ समष्टिलिङ्गशरीरल्यादिः ॥ १०६६ ॥

**दोषत्वम्**—कार्यविरोधित्वम् १ * तावदन्यतमत्वम् २ भ्रमत्वावच्छिन्नप्रतिजनकतावच्छेदिका याऽविद्यात्वजातिस्तद्वत्त्वं वा ॥ १०६९ ॥

**द्रवत्वम्**—आद्यस्यन्दनासमवायिकारणम् ।१०७३।

**द्रव्यत्वम्**—लिङ्गसङ्ख्याकारकान्वितत्वमिति वैया० १ गुणक्रियाश्रयत्वमिति मी० २ गगनारविन्दसमवेतत्वे सति नित्यगन्धासमवेतत्वमिति सर्वद० ३ गुणाश्रयत्वम् ४ गुणवत्त्वं वा ५ समवायिकारणत्वं वा ६ साक्षात्संबन्धेनेन्द्रियग्राह्यत्वं वा ७ कार्याश्रयत्वमिति वादीन्द्रः ८ गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वम् ९ गुणकर्मभिन्नत्वे सति सामान्यवत्त्वं वा १० संयोगवद्वृत्तिसत्तावान्तरजातियोगित्वम् । गुणादावतिव्याप्तिपरिहाराय संयोगवद्वृत्तीति विशेषणम्, सत्तामादाय गुणादावतिव्याप्तिपरिहाराय सत्तावान्तरग्रहणमिति लक्षणमालायाम् ॥ १०८४ ॥

**द्वारत्वम्**—तज्जन्यत्वे सति तज्जन्यजनकत्वम् १०८८

**द्वेषः**-लोकानामुद्वेगाचरणम् १ दुःखतत्साधनयोः क्रोधो

---

१ बौद्धकापालिकाऽऽर्हतलौकायतशाक्तादिभ्यो विमुखत्वम् ।

वा २ द्विष्टसाधनताज्ञानजन्यगुण इति ग्रं० ३ द्वेष्मीत्यनुभवविषयवृत्तिगुणत्वव्याप्यजातिमानिति नै०।

**द्व्यणुकम्**—परमाणुद्वयारब्धकार्यम् ॥ १०९६ ॥

## ध

**धनुर्वेदः**—धनुःप्रयोगसंहारज्ञापकत्वे सति यजुर्वेदस्योपवेदः ॥ ११९७ ॥

**धर्मत्वम्**—अन्याश्रितत्वे सति स्वतन्त्रताशून्यत्वम् १ * वेदविहितत्वम् २ अलौकिकश्रेयःसाधनत्वेन विहितक्रियात्वं वेति ललामेन गागाभट्टेन ३ बलवदनिष्टाप्रयोजकत्वे सति श्रेयःसाधनतया वेदप्रमापितत्वम् । श्येन-स्वर्ग-भोजन-व्यावृत्त्यर्थं विशेषणत्रयमिति वीरमित्रोदये मित्रमिश्रः ४ कार्यनियोगापूर्वपर्यायकैः शब्दैरुच्यमानो धात्वर्थसाध्यस्वर्गादिफलसाधनपुरुषगुणत्वमिति प्राभाकराः ५ वेदप्रतिपाद्यत्वे सति प्रयोजनवदर्थत्वम् । प्रयोजनेऽतिव्याप्तिवारणाय प्रयोजनवदिति, भोजनादावतिव्याप्तिवारणाय वेदप्रतिपाद्यत्वे सतीति,

अनर्थफलकत्वादनर्थभूते श्येनादावतिव्याप्तिवारणा-
यार्थत्वमिति मी० ६ यागजन्यस्वर्गजनकवृत्तिगु-
णत्वव्याप्यजातिमत्त्वमिति तार्किकमते ।११०५।

धर्मित्वम्—प्रतियोगिभिन्नत्वे सति भेदनिरूपकत्वम्

धातुत्वम्—क्रियावाचित्वे सति गणपठितत्वम् ११०७

धारणा—सारासारावधारणपूर्वकं प्रत्युक्तिसमये स्मरणयोग्यतापादनम् १ मूलाधार-स्वाधिष्ठान-मणिपूरका-ऽनाहत-विशुद्धा-ऽऽज्ञाचक्रदेशानामन्यतरस्मिन्प्रत्यगात्मनि वा चित्तस्थापनमित्यादर्शे ।

धारावाहिकज्ञानम्—घटो घट इत्याकारकः सतत-प्रत्ययः ॥ १११० ॥

धृतिः—अवसन्नानां देहेन्द्रियाणामवष्टम्भहेतुः प्रयत्नः

ध्यानम्—अन्तराऽन्तरा वृत्त्यन्तरवती प्रत्ययैकता-नता ( सजातीयप्रत्ययप्रवाहः ) १ विजातीयप्रत्य-यतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणमिति ग्रं०

ध्वंसत्वम्—जन्याभावत्वम् ॥ ११९४ ॥

**ध्रुवत्वम्**—प्रकृतधात्वर्थव्यापारानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वम् ॥ ११२५ ॥

## न

**नगरम्**—पण्यक्रियादिनिपुणत्वे सत्यनेकजातिसंबद्धम्

**ननु**—प्रत्युक्तौ आक्षेपः ॥ १११७ ॥

**नमः**—स्वापकर्षबोधानुकूलव्यापारः ॥ १११९ ॥

**नमस्कारः**—करशिरःसंयोगादौ व्यापारः ११२०

**नमस्कारमङ्गलम्**—स्वनिष्ठापकर्षविषयकबोधानुकूलः स्वीयव्यापारः ॥ ११२१ ॥

**नरकः**—पापिलोकपापभोगस्थानम् १ नास्त्यस्मिन् रमणं रतिकरं स्थानमल्पमस्तीति ॥ ११२३ ॥

**नाटकम्**—गद्यपद्यप्राकृतभाषादिमयग्रन्थविशेषः ।

**नादः**—संवृत्ते गलविवरे यत्कण्ठनिनादनकरणम् ।

**नान्तरीयकत्वम्**—अन्यनिष्पादकयत्ननिष्पाद्यत्वम् ।

**नाम**—शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते,तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ ११२८ ॥

नाममात्रम्—स्ववीर्यहीनत्वे सति संज्ञाधारिमात्रत्वम्।

नास्तिकः—परलोकाद्यभावप्रतिपादकः १ वेदनिन्दको वा॥ ११३१ ॥

निगमः—अध्वनिपर्यायकथनेन वेदार्थबोधकः ११३२

निगमनम्—हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनम्, यथा तस्मात्(=धूमात्)तथा(=वह्निमान्)इति ११३३

निग्रहः—अनुग्रहाभावः १ * इन्द्रियाणां विषयेभ्यो निग्रहणम् ॥ ११३५ ॥

निग्रहस्थानम्—पराजयहेतुः १ वादिनोऽपजयहेतुर्वा २ उद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गत्वं निग्रहस्थानत्वम् ३ वादिप्रतिवादिनोऽसामर्थ्यबोधकत्वं वेति सूत्रवृत्तौ ॥ ११३९ ॥

निघण्टुः—पर्यायनाम्नामेकत्रार्थकथनाय संग्रहः १ वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मक इति प्रस्थानभेदे ॥ ११४१ ॥

नित्यत्वम्—सर्वकालवृत्तित्वम् १ अविच्छिन्नपरम्पराकत्वमिति म० २ ध्वंसाप्रतियोगिवृत्तित्वविशिष्ट-

सत्तायोगित्वमिति गौडब्रह्मानन्द्याम् ३ भावत्वे ध्वंसभिन्नत्वे वा सति ध्वंसाप्रतियोगित्वम् । ध्वंसेऽतिव्याप्तिवारणाय ध्वंसभिन्नेति विशेषणम्, घटादावतिव्याप्तिवारणाय विशेष्यदलम् ५ ध्वंस-प्रागभावान्यतराप्रतियोगित्वमित्यपरे ॥११४७॥

**नित्यकर्म**—अवश्यापेक्षितफलसाधनम् १ अकरणे प्रत्यवाय(जनकम् २)अनुबन्धित्वं नित्यकर्मत्वम्, यथा ब्राह्मणस्य सन्ध्यागायत्र्यादि ३ प्रत्यवाय-जनकीभूताभावप्रतियोगित्वम्, यथा एकादश्या-मुपोषणमिति धर्मज्ञाः ४ अहरहर्जायमानत्वम्, यथा नित्यं कुमाराः क्रीडन्तीति ग्रं०॥११९२॥

**नित्यप्रलयः**—प्राणिनां सुषुप्तिः ॥ ११९३ ॥

**निदिध्यासनम्**-अपरोक्षनिश्चयत्वसंपादकस्तर्कः १* विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवा-हीकरणमित्यद्वैतमते २ श्रुतार्थस्य नैरन्तर्येण दीर्घकालमनुसन्धानमिति नैयायिकाः ॥११९६॥

निद्रा—अभावप्रत्ययालम्बना वृत्तिः १ प्रबुद्धप्रत्यवमर्शहेतुत्वम् ॥ ११९८ ॥

निन्दा—विरोधिभिः पुरुषैः स्वस्मिन्नापादिता दोषोक्तिः १ आस्येन परस्य विद्यमानाविद्यमानदोषसङ्कीर्तनं वा ११९० [ वचनम् ।

निन्दाऽर्थवादः—अनिष्टबोधनद्वारा विध्यर्थप्रवर्तकं

निन्दितम्—शास्त्रलोकयोर्गर्हितम् ॥ ११६२ ॥

निमन्त्रणम्—आवश्यकश्राद्धभोजनादौ प्रवर्त्तनम् ।

निमित्तकारणम्—स्वातिरिक्तकार्यजनकम् १ कार्योत्पत्तिमात्रकारणम्, यथा घटादेः कुलालादि २ कार्यानुकूलव्यापारवत्कारणमिति ग्रं० ॥११६६॥

नियमः—आगन्तुकसाधनकर्मरूपाङ्गीकारः १ * शौचादिसम्पादनम् २ शौचाद्यन्यतमत्वं नियमत्वम् ३ कायवाक्साध्यत्वे सति योगाङ्गविशेषत्वमिति ग्रं० ४ जन्महेतुः काम्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामधर्मे नियमयति प्रेरयतीति। नियमफलानि सकामानां योगशास्त्रे कथितानि। तथाहि-शौ-

चात्स्वाङ्गजुगुप्सा परैरसंसर्गः' 'सन्तोषादनुत्तमसुखलाभः' 'स्वाध्यायादिष्टदेवतासंप्रयोगः ११७१

**नियमविधिः**—पक्षे प्राप्तस्याऽप्राप्तांशपूरको विधिः, यथा यागाङ्गत्वेन प्राप्तानां व्रीहीणां नखविदलनमुसलावहननयोर्द्वयोः पक्षयोः कदाचिन्नखविदलनस्य प्राप्तौ सत्यां मुसलावहननमप्राप्तं स्यात्तस्य पूरको व्रीहीनवहन्यादित्यवघातविधिः। अपूर्वविधावतिव्याप्तिवारणाय पक्षप्राप्तेति १ नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको विधिरिति वे०सि०लेशे २ पक्षेऽप्राप्तस्य प्रापकत्वमिति नै० ॥ ११७४ ॥

**निराकाङ्क्षा**-शाब्दबोधोपयोग्यपेक्षाशून्यता ११७६

**निरुक्तम्**—पदानामवयवार्थनिर्वचनप्रतिपादकम् १ वैदिकपदानां पर्यायव्युत्पत्त्यादिप्रतिपादकं शास्त्रमित्यादर्शे २ * शब्दस्य सर्वावयवार्थानुगमेन प्रसिद्धार्थादर्थान्तरे वृत्तिः, यथा सोमशब्दस्य पार्वतीसहितमहेश्वरे शक्तिरिति विवरणे ११७९

**निरुपाधिकभेदत्वम्**—उपाधिसत्ताव्याप्यसत्ताकत्वात्यन्ताभाववत्त्वम् ॥ ११८० ॥

**निरुपाधि** काध्यासः / कभ्रमः— } उपाधिनिरूपणानधीननिरूपणम् ॥ ११८१ ॥

**निरूढलक्षणा**—अनादितात्पर्यविषयीभूतार्थनिष्ठालक्षणा, यथा नीलो घटः ॥ ११८३ ॥

**निरूपणम्**—लक्षणप्रमाणस्वरूपाभिधानम् १ तत्त्वज्ञानानुकूलशब्दप्रयोगो वा ॥ ११८५ ॥

**निरूपणीयनिष्ठसङ्गतिः**—अनंतराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्मरणानुकूलसंबन्धः ।

**निरोधः**—इन्द्रियाणां विषयेभ्यो निग्रहणम् ११८७

**निर्णयः**—अनुभूतार्थकथनम् १ * यथार्थार्थानुभवपर्याया प्रमितिरिति **सर्वद**० २ निश्चयग्राहिणि तदभावाग्राहिणि ज्ञानमिति **बृहदभिधाने** ११९०

**निर्देशः**—निर्दिश्यतेऽभिधीयतेऽनेनेति ॥११९१॥

**निर्वाहकत्वम्**—तदन्यत्वे सति तन्निर्वाहकनिर्वाह्यत्वम्

**निर्विकल्पकम्**—संसर्गानवगाहिज्ञानम्, यथा सोऽयं

देवदत्तः १ निर्गतो विकल्पो विशेष्यविशेषणतासंबन्धो यस्मात् ॥ ११९४ ॥

निर्विकल्प असंप्रज्ञात समाधिः—ज्ञातृज्ञानज्ञेयविकल्पानवभासपुरःसरमात्मनि चित्तसमाधानमपरनाम निर्बीजः ॥ ११९५ ॥

निवृत्तिः—प्रवृत्त्युपाधिविनाशको यत्नः ॥११९६॥

निश्चयः- संशयविरोधिज्ञानम् १ तदभावाप्रकारकत्वे सति तत्प्रकारकज्ञानत्वम् ॥ ११९८ ॥

निषिद्धकर्म—प्रत्यवायजनकं कर्म, यथा गोहत्यादि।

निषेधः—पुरुषनिवर्त्तकं वाक्यम् १ अनिष्टसाधनताबोधकवेदादिवाक्यं वा ॥ १२०१ ॥

निष्कर्षः—सारांशः १ निष्कृष्टत्वम् ॥ १२०३ ॥

निष्कामकर्मत्वम्—कर्तृत्वाभिमानफलेच्छाभावत्वे सत्यन्तर्यामीश्वरचरणैकसमर्पितत्वम् १ निर्गतः कामोऽभिलाषो यस्य यत्र वा ॥ १२०५ ॥

निष्परिग्रहः—कन्थापादुकाद्यतिरिक्तद्रव्यानङ्गीकारः

---

१ निर्गतं क्लेशकर्मादिबीजं यत्रेति व्युत्पत्तेः।

**निःस्वरूपत्वम्**—अप्रतिपन्नोपाधिकत्वे सति स्वरूपेण निषेधप्रतियोगित्वम् ॥ १२०७ ॥

**नीतिः**—राजविद्यानियन्तृशास्त्रम् ॥ १२०८ ॥

**नैमित्तिककर्म**—कुतश्चिन्निमित्तात्कृतं कर्म, यथा पुत्रेष्ट्यादि ॥ १२०९ ॥

**नैमित्तिक मन्वन्तर प्रलयः**—सर्वकार्यद्रव्यध्वंसः १ एकस्मिन्मन्वादावपगतेऽपराधिपत्यान्तरालकाल इति वे० सिद्धान्तादर्शे २ कार्यब्रह्मणो दिवसावसाननिमित्तकत्रैलोक्यमात्रप्रलय इति धर्मराजः।

**नैवेद्यम्**—देवतोद्देशेन त्यक्तद्रव्यम् ॥ १२१४ ॥

**नैष्ठिकब्रह्मचारी**—यावज्जीवं गृहीतब्रह्मचर्यव्रतः।

**नोदनसंयोगः**—स्पर्शवद्द्रव्यसंयोगः ॥ १२१६ ॥

**न्यायः**—लोकशास्त्रप्रसिद्धदृष्टान्तः १* प्रमाणानुग्राहकस्तर्कः २* प्रमाणैरर्थपरीक्षणम् ३* उचितानुपूर्विकप्रतिज्ञादिपञ्चकसमुदाय इति शिरोमणिः ४ तृतीय—अनुमितिचरमकारण वा लिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यमिति चिन्तामणौ।

न्यायशास्त्रम्–पदार्थानां सर्वेषामनुगमरूपेण प्रकाशको ग्रन्थः १२२३ [ स्थानम् १२२४

न्यूननिग्रहस्थानम्–यत्किञ्चिदवयवशून्यावयवाभि-

न्यूनवृत्तित्वम्–तत्समानाधिकरणाभेदप्रतियोगितानवच्छेदकत्वम् ॥ १२२५ ॥

## प

पक्षः–शुक्लकृष्णप्रतिपदादिपञ्चदश्यन्तपञ्चदशातिथ्यात्मक इति मौहूर्तिकाः १ वादिप्रतिवादिभ्यां दर्शितविप्रतिपत्तौ कोटिः २ * सन्दिग्धसाध्यवान् ३ अनुमित्युद्देश्यमिति नवीनमते ॥ १२२९ ॥

पक्षपातः–पक्षेऽन्यायसहाये पातः अभिनिवेशः।

पङ्क्तिः–ग्रन्थार्थबोधकशवः १ * सजातीयपदार्थानां स्थितिः ॥ १२३२ ॥

पञ्चीकरणम्–स्वस्वेतरभूतचतुष्टयभागविशेषेण मिश्रीकरणम्, यथा पञ्चानां भूतानामेकैकं द्विधा विभज्य स्वार्द्धभागं विहायार्द्धभागं चतुर्धा विभज्येतरेषु

योजिते १ यद्वा भूतानि प्रत्येकं पञ्चधा विभज्य सद्भूतांशे पञ्चसमुदायकरणम् ॥ १२३५ ॥

पटत्वम्-स्वाश्रयपटभिन्नाधिकरणावृत्तिर्जातिः १२३६

पण्डितः—पण्डा शास्त्रतात्पर्यवती बुद्धिः संजाता यस्य सः ॥ १२३७ ॥

पतितः—नरकगमनसूचककर्मविशेषकारकः १२३८

पतित्वम्-निरतिशयदृक्क्रियाशक्तिमत्त्वमिति शैवमते

पतिव्रता—आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा, मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥ १२४० ॥

पत्रत्वम्—लेखनाधारत्वम् ॥ १२४१ ॥

पदम्—सुप्तिङ्न्तम् १ विभक्त्यन्तशब्दो वा २* वर्णस(मुदायः ३)मूहः ४ अर्थवद्वर्णो वा ५ वाक्यैकदेशो वा ६ वृत्तिमत्त्वं पदत्वमिति गौ० वृ० ७ प्रत्येकं संभूय च वाक्यांशबोधको वर्ण इति पञ्चीकरणविवरणटीकायाम् ८ अर्थस्वरूप-मात्रबोधको वर्णसन्दर्भ इति सं०शा०टी० राम-

तीर्थः ९ शाब्दप्रतीत्यजन्यशाब्दप्रतीतिजनकं वर्णात्मकम् । शाब्दप्रतीतिजन्यशाब्दप्रतीतिजनकं वाक्यं प्रथमविशेषणेन व्यावर्त्यते, द्वितीयेन प्रत्यक्षानुमानादावतिव्याप्तिर्व्युदस्यते, वर्णात्मत्व-विशेषणाददृष्टेश्वरादीति चित्सुख्याम् १० तच्च यौगिकरूढयोगरूढयौगिकरूढभेदेन चतुर्विधं ल० तत्तच्छब्दे द्र० ॥ १२९१ ॥

**पदार्थः**—पदनिष्ठवृत्तिविषयः १ पदजन्यज्ञानविषयत्वं पदार्थत्वम् २* द्रव्याद्यन्यतमत्वम् ३ ज्ञेयत्वं प्रमे-यत्वमभिधेयत्वमस्तित्वं पदार्थसामान्यलक्षणम् ।

**पदार्थाऽभावनी**—असंसक्तिभूमिकाभ्यासपाटवाच्चिरं प्रपञ्चाऽपरिस्फूर्त्यवस्था, गाढसुषुप्तिरिति चोच्यते । अस्यामवस्थायां परप्रयत्नेन योगी व्युत्तिष्ठते ।

**पदैक्यवाक्यत्वम्**—पदस्य वाक्येन सहैकवाक्यतै(तयै)

---

१ शब्दजनिता या प्रतीतिस्तयाऽजन्यत्वे सति शाब्द-प्रतीतिजनकं वर्णात्मकं च यत्तत्पदमित्यर्थः ।

कार्यबोधकत्वम् १ पदरूपार्थवादवाक्यस्य विधिवाक्येन सह यदेकवाक्यत्वमिति ग्रं० ॥१२५८॥

परकृत्यर्थवादः—पुरुषविशेषनिष्ठमिथोविरुद्धकथनम्।

परतउत्पत्तिकत्वम् / परतःप्रामाण्यवादः } ज्ञानमात्रजनकसामग्र्यतिरिक्तकारणप्रयोज्यत्वम् १ आगन्तुकभावकारण( अपेक्षज्ञानसामग्रीजन्यत्वम् २ ) सहकृतज्ञानप्रयोजकप्रयोज्यत्वमिति पु० १२६३

परतोग्राह्यत्वम् / ज्ञप्तिपरतस्त्वम् } स्वाश्रयग्राहकातिरिक्तसामग्रीग्राह्यत्वमिति वेदा० १ज्ञानमात्रग्राहकसामग्रीभिन्नसामग्रीग्राह्यत्वम् ॥ १२६५ ॥

परतःप्रमाणत्वम्—आम्नायरूपमूलप्रमाणसापेक्षप्रमाणत्वम्, यथा स्मृत्यादिवाक्यम् ॥ १२६६ ॥

परत्वम्—परव्यवहारासाधारणकारणम् ॥ १२६७ ॥

परसामान्यत्वम्—अधिकदेशवृत्तित्वम् ॥ १२६८ ॥

परदेशः—स्वाधिष्ठितदेशाद्भिन्नदेशः ॥ १२६९ ॥

परप्रकाशत्वम्—वेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम्।

परममहत्त्वम्—अपकर्षानाश्रयपरिमाणत्वम् १२७१

**परमहंसः**—एकदण्डधरो मुण्डोऽयज्ञोपवीतित्यक्तसर्वकर्मात्मनिष्ठः सः १ परमः हंस आत्मा यस्य २ स विविदिषाविद्वद्भेदेन द्विविधः ल०त०द्र० १२७३

**परमाणुः**—मूर्तत्वे सति निरवयवः १ मनोभिन्नत्वे सति परमाणुत्वपरिमाणवानिति न्या० २ जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः, तस्य षष्ठतमो भागः परमाणुः स उच्यते ॥ १२७६ ॥

**परम्परासंबन्धः**—स्वसंबन्धिनः संबन्धः॥ १२७७ ॥

**परम्परासाधनत्वम्**—अव्यवहितपूर्वत्वसंबन्धेन कार्याधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्मावच्छिन्नजनकत्वे सति कार्यनियतपूर्ववर्त्तितावच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वमिति मथुरानाथः ॥ १२७८ ॥

**परलोकः — लोकान्तरम्** } स्थूलशरीराभिमानपरित्यागः १ पारलौकिकस्थितिस्थानम् ॥ १२८० ॥

**परवैराग्यम्**—ब्रह्मज्ञानसाधारणविषयेषु (त्रिगुणत्वादिदोषदर्शनात्) वैतृष्ण्यमित्यादर्शे ॥ १२८१ ॥

**परामर्शः**—व्याप्तिवि (शिष्टपक्षधर्मताज्ञानम् १) षयक-पक्षधर्मताज्ञानम् ॥ १२८४ ॥

**परार्थानुमानम्**—न्यायप्रयोज्यानुमानम् १२८५

**परार्थानुमितिः**—स्वयं व्याप्याद्व्यापकं प्रतीत्य परप्रतिपत्त्यर्थं प्रयुक्तात्त्र्य(पञ्चा)वयववाक्यात्परस्य व्यापकप्रत्ययः ॥ १२८६ ॥

**परार्द्धम्**-स्थानात्स्थानं दशगुणमेकैकं गुण्यते द्विजाः, ततो ह्यष्टादशे भागे परार्द्धमभिधीयते१२८७

**परावाक्**—मूलाधारचक्रस्थवाय्वभिव्यङ्ग्योतिसूक्ष्मात्माऽस्मदादेरप्रत्यक्षः शब्दः ॥ १२८८ ॥

**परिग्रहः**—शरीरनिर्वाहाधिकार्थार्जनम् १ शरीरधारणार्थकमस्पृहत्वेऽपि परापनीतं बाह्योपकरणं वा ।

**परिच्छिन्नत्वम्**—भेदप्रतियोगित्वम् १ प्रतियोगिसमानसत्ताकात्यन्ताभावप्रतियोगित्वं वा २ अत्यन्ताभावाद्यन्यतमप्रतियोगित्वमिति ग्रं०॥१२९४॥

**परिणामः**—पूर्वरूपापाये रूपान्तरापत्तिः १ पूर्वरूपपरित्यागे सति नानाकारप्रतिभास इति म० २

**परिहारत्वम्**—दोषाद्युद्धरणत्वम् ॥ १३१३ ॥

**परीक्षकः**—शास्त्रसंस्कृतमतिः १ प्रमाणेन परीक्ष्य-
व्यवहर्त्ता वा ॥ १३१५ ॥

**परीक्षा**—तर्कप्रमाणादिना वस्तुतत्त्वावधारणम् ।

**परोक्षज्ञानम्—** } विषयचित्तादात्म्याऽनापन्नं प्रमाण-
**ज्ञानगतपरोक्षता** } चैतन्यम् १ अनधिगताबाधितवर्त-
मानयोग्यविषयचैतन्यभिन्नं प्रमाणचैतन्यमिति ग्रं०

**परोपकारः**—परस्य हितादिसंपादनव्यापारः १३१९

**पर्य्यवसानत्वम्**—तात्पर्यवृत्त्याबोधनत्वम् ॥ १३२१ ॥

**पर्यायः**—समानार्थबोधकः १ नानाशब्दैकार्थबोधको
वा २ तत्समानार्थकपदान्तरेण तदर्थकथनं वा ।

**पशुत्वम्**—लोमवल्लाङ्गूलवत्त्वम् ॥ १३२६ ॥

**पश्चिमा** } स्वापेक्षयास्ताचलसं( निहिता दिक् १)
**प्रतीची** } युक्ता दिक् ॥ १३२७ ॥

**पश्यन्ती**—नाभिचक्रस्थवाय्वभिव्यङ्ग्यो योगिप्र-
त्यक्षगोचरः शब्दः १३२८ [वा १३३०

**पाखण्डी**—वेदाचारत्यागी १ वेदविरुद्धार्थप्रतिपादको

पाठः—शास्त्रादिपौनःपुन्येनोच्चारणम् ॥ १३३१ ॥

पाठ व्यसनम् वासना- } शास्त्रतात्पर्यग्रहणेन समग्रावस्थाशास्त्रपाठासक्तिः ॥ १३३२ ॥

पाणिः—मणिबन्धावध्यङ्गुलिपर्यन्तः १ आदानक्रियासाधनमिन्द्रियम् ॥ १३३४ ॥

पात्रम्—स्वयजमानयोरक्षकम् १ पतन्तं त्रायते ।

पादः—गमनक्रियासाधनमिन्द्रियम् ॥ १३३७ ॥

पापकर्म—पापजनकं कर्म ॥ १३३८ ॥

पापम्—वेदनिषिद्धक्रियाजन्यम् १ निषिद्धानुष्ठानजन्यं वा २ वेदैकप्रतिपाद्योऽनर्थं वा ३ तत्रिविधम् ।

पापमध्यमम्—आम्रपनसादिशरीरापादकम् १३४२

पापसामान्यम्—लोकेऽज्यगोगजाश्वत्थतुलस्यादिशरीरप्रापकम् १३४३

पापोत्कृष्टम्—परतापकगुच्छगुल्मवृश्चिकादिशरीरप्रा- [ पकम् १३४४

पामरत्वम्—शास्त्रसंस्कारशून्यत्वे सति विषयभोगासक्तत्वम् ॥ १३४५ ॥

पायुः—विसर्गक्रियासाधनमिन्द्रियम् ॥ १३४६ ॥

पारमार्थिकसत्त्वम्—कालत्रयाबाध्यत्वम् १३४७
पारायणम्—भागवतादीनामाद्यन्तपाठाधिकारेण प्रवृत्तम् १३४८ [धकः शब्दः १३४९
पारिभाषिकः—शास्त्रकारसङ्केतविशेषेण तत्तदर्थबो-
पुण्यकर्म—पुण्यजन्यकं कर्म ॥ १३५१ ॥
पुण्यम्—विहितानुष्ठानजन्यम् १ वेदविहितक्रियाजन्यं वा २ तत्त्रिविधम् ॥ १३५३ ॥
पुण्यमध्यमम्—इन्द्रादिशरीरप्रापकम् ॥ १३५४ ॥
पुण्यसामान्यम्—यक्षरक्षादिशरीरापादकम् १३५५
पुण्योत्कृष्टम्—हिरण्यगर्भशरीरप्रापकम् ॥१३५६॥
पुनरुक्तम्—अनुवादं विना कथितस्य पुनः कथनम् १ अनुवादान्यत्वे सति पुनर्वचनम् ॥ १३५८ ॥
पुनरुक्तिः—पुनः पुनरुक्तिः १ एकार्थबोधकानेकपदोक्तिर्वा ॥ १३६० ॥
पुरम्—बहुग्रामीणव्यवहारस्थानम् ॥ १३६१ ॥
पुरश्चरणम्-मन्त्रफलसिद्ध्यर्थमुपोद्घातत्वेन पूर्वसेवनम्
पुराकल्पार्थवादः—ऐतिह्यसमाचरिततया कीर्तनम्।

**पुराणम्**—पुरातनवृत्तान्तकथनम् १ सर्गश्च प्रतिस-र्गश्च वंशो मन्वन्तराणि च, वंशानुचरितश्चैव पुराणं पञ्चलक्षणम् ॥ १३६९ ॥

**पुरुषः**—अजन्यत्वे सत्यजनक इति साङ्ख्याः १ पुरुषा-र्थसम्पादनयोग्यः २ पूर्ष्वष्टसु वसतीति ॥१३६८॥

**पुरुषार्थः**-त्रिविधदुःखात्यन्तनिवृत्तिरिति सां. १ सुखा-वाप्तिर्दुःखपरिहार इति वे० २ पुरुषेण साध्योऽर्थः।

**पुस्तकत्वम्**—लिप्याधारत्वम् १ तैलाद्रक्षेज्जलाद्रक्षे-द्रक्षेच्छिथिलबन्धनात्, मूर्खहस्ते न दातव्यं वदेदे-वं च पुस्तकम् ॥ १३७३ ॥

**पूरकप्राणायामः**—इडया (=वामनासिकया) षोडश-मात्राभिः प्राणवायोः पानम् ॥ १३७४ ॥

**पूर्वा-प्राची**—स्वापेक्षयोदयाचलसं( निहिता दिक् १ ) युक्ता दिक् ॥ १३७७ ॥

**पूर्वपक्षः**—शास्त्रीयसंशयनिरासार्थः प्रश्नः १ सिद्धा-न्तविरुद्धकोटिर्वा २ सिद्धान्तविरोधितर्कोपन्यास इति ग्रं० ॥ १३८० ॥

**पूर्वमीमांसा**—पूर्वकाण्डवेदविचारशास्त्रम् ॥१३८१॥
**पूर्ववदनुमानम्**—पूर्वगृहीतव्यक्तिसामान्यविषयमनुमानम् ॥ १३८२ ॥
**पूर्ववृत्तित्वम्**—कार्यप्रागभावाधिकरणक्षणवृत्तित्वम् ।
**पृच्छा**—ज्ञातुमिच्छा ॥ १३८५ ॥
**पृथक्त्वम्**—पृथग्व्यवहारासाधारणकारणम् ।१३८६।
**पैशून्यम्**—परोक्षे परदूषणवचनम् १ परस्मै परोक्षे परदोषप्रकाशनं वा ॥ १३८९ ॥
**पौरुषेयत्वम्**—नूतनानुपूर्वीरचनत्वमिति केचित् १ पूर्वानुपूर्व्यनपेक्षपुंविशेषबुद्ध्यधीनानुपूर्वीमत्त्वमिति महादेवः २ सजातीयोच्चारणानपेक्षो(च्चारणविषयत्वमिति वे०परिभाषायाम् ३) च्चरितजातीयत्वम्, यथा भारतादिरिति चिन्तामणौ ॥ १३९३ ॥
**प्रकरणम्**—एकार्थप्रतिपादकग्रन्थांशः २* शास्त्रासिद्धान्तप्रतिपादकग्रन्थः ३* शास्त्रैकदेशसम्बद्धत्वे सति शास्त्रकार्यान्तरे स्थितम् ४ मीमांसकास्तु उभयाकाङ्क्षा, यथा प्रयाजादिषु । शाब्दबोधकार-

णीभूताकाङ्क्षायामतिप्रसङ्गस्तद्वारणायोभयेति वि-
शेषणम् ५ अङ्गवाक्यसापेक्षं प्रधानवाक्यमिति
ग्रं० १३९९ [ याद्यगोचरत्वम्।

**प्रकाशमानत्वम्**—स्वसत्तायां स्वसत्ताप्रकारकसंश-

**प्रकृतिः**—प्राचीनकर्मसंस्काराधीनस्वभावः १ * त-
त्त्वान्त (रोपादानम् २)रारम्भकत्वं प्रकृतित्वम् ३
अजन्यत्वे सति जनकत्वं मूलप्रकृतित्वमिति
साङ्ख्यमते ४ प्राथमिकविधिप्रतिपादितसमग्रेतिकर्त्त-
व्यताकत्वमिति मी० ५ कार्याकारेण विक्रियमा-
णत्वमिति न्या० ६ सत्त्वरजस्तमोगुणानां साम्या-
वस्था इति वे० ७ अर्थावबोधहेतुः प्रत्ययविधा-
नावधिभूतः शब्दविशेषः ८ तदर्थान्वितस्वार्थबोधने
तदपेक्षत्वे सति तद्विधानावधिभूतत्वमिति वैया०।

**प्रतिग्रहः**—अदृष्टार्थत्यक्तद्रव्यस्वीकारः ॥१४११॥

**प्रतिज्ञा**—उत्तरकाले स्वकर्तव्यत्वेन निर्देशः १ कर्तव्य-
त्वप्रकारकज्ञानानुकूलव्यापारो वा २* पक्षे साध्य-

निर्देशः २ साध्यविशिष्टपक्षबोधजनकवचनं वा, यथा पर्वतो वह्निमानिति ॥ १४१६ ॥

**प्रतिज्ञाहानिः**—प्रतिज्ञातार्थपरित्यागः १ स्वकृतोक्तपरित्यागो वा १४१७ [गतः सिद्धान्तः।

**प्रतितन्त्रसिद्धान्तः**—वादिप्रतिवाद्येकतरमात्राभ्युप-

**प्रतिपादनम्**-प्रतिपाद्यं मुखतः प्रतिज्ञाय पश्चात्तत्सिद्धिहेतुप्रदर्शनम्। प्रतिपाद्यं प्रतिज्ञाय हेतुवर्णनमित्युक्तम्, उपोद्घातेऽपि प्रसङ्गस्तदर्थं मुखत इति, अवयवविपर्यासेनाऽप्राप्तकालतां व्यावर्तयति पश्चादिति, असम्बद्धहेतुव्यावृत्यर्थं तत्सिद्धीतीति विवरणे ॥ १४२० ॥

**प्रतिबन्दी**—अनिष्टान्तरप्रसञ्जकं वाक्यम् १ नोद्यपरिहारसाम्यं वा २ प्रकृतैककल्पे प्रवृत्तं पुरुषमुद्दिश्याप्रकृतकल्पान्तरापादनमिति ग्रं०।१४२३।

---

१ यदि पुरुषत्वादयं चौरस्तदा एवं त्वमपि चौरः स्या इत्यापादनमित्यर्थः।

**प्रतिबन्धः**—कार्यानुकूलकिञ्चिद्धर्मविघटकः, यथाग्नौ दाहरूपकार्यानुकूलस्य कस्यचिद्धर्मस्य शक्त्याख्यस्य विघटको मणिमन्त्रौषधादिः ॥१४२४॥

**प्रतिबन्धकत्वम्**—कारणीभूताभावप्रतियोगित्वम् १ पुष्कलकारणे सति कार्योत्पादविरोधित्वं वा । सामग्र्यभावं व्यावर्तयितुं पुष्कलेति २ सामग्रीकालीनकार्यानुत्पादप्रयोजकत्वमिति ग्रं० १४२७

**प्रतिबिम्बत्वम्**—तदधीनत्वे सति तत्सदृशत्वम् १ उपाधिनिमित्तस्वप्रतियोगिकव्याप्यवृत्तिभेदकत्वे सत्युपाधिपरिच्छिन्नत्वमिति सङ्क्षेपशारी० टी० म० २ उपाध्यन्तर्गतत्वे सति औपाधिकपरिच्छेदशून्यत्वे सति बहिः स्थितस्वरूपकत्वम् । बिम्बवारणायाद्यम्, घटाकाशादिवारणाय द्वितीयम्, दर्पणाद्यन्तर्गततदवयववारणाय तृतीयमिति न्यायरत्नावल्याम् ।

---

१ सामग्रीकालीनो यः कार्यानुत्पादः तत्प्रयोजकत्वव्याप्यत्वमित्यर्थः ।

**प्रतिभाप्रमाणम्**—श्वस्ते भ्राताऽऽगन्तेत्यादिकम्।

**प्रतियोगित्वम्**—विशिष्टप्रतीतिविषयविशेषणत्वम् १ धर्मिभिन्नत्वे सति भेदनिरूपकत्वं वा २ यस्याभावः संबन्धः सादृश्यं वा सः प्रतियोगी १४३९

**प्रतिवादी**—वादिप्रयुक्तन्यायवाक्यविरुद्धवाक्यवादी।

**प्रतीकः**—आश्रयान्तरप्रत्ययस्याश्रयान्तरे प्रक्षेपः १ * तद्भिन्नत्वे सति तदर्थबोधकम् ॥ १४४० ॥

**प्रतीकोपासनम्**—ब्रह्मप्रतीकानामादित्यादीनां ब्रह्मदृष्ट्युपासनम्। तच्च सम्पदारोपसंवर्गाध्यासभेदाच्चतुर्विधम् ॥ १४४१ ॥

**प्रत्यक्षम्— अपरोक्षम्— साक्षात्कारः**— इन्द्रियसम्प्रयोगजं ज्ञानम् १ इन्द्रियार्थसंनिकर्षोत्पन्नज्ञानं वा। सन्निकर्षध्वंसवारणाय ज्ञानमिति, अनुमित्यादिवारणायेन्द्रियार्थसन्निकर्षेति नै० २ व्याप्त्याद्यजन्यत्वे सति स्वकालावच्छिन्नार्थबोधत्वं प्रत्यक्षत्वम् ३ अपरेऽनुपलब्ध्यर्थापत्तिशब्दानुमानोपमानजप्रमितिव्यतिरिक्तत्वे

सति प्रमितित्वम् । अनुमादावतिव्याप्तिवारणाया-
नुपलब्धीत्यादिविशेषणम्, घटादिवारणाय प्रमि-
तित्वमिति ४ तत्तदिन्द्रियप्रमाणचैतन्यस्य वा
योग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वम् ५ यो-
ग्यत्वे सति वर्तमानविषयचैतन्याभिन्नप्रमाणचैत-
न्यविषयत्वं वेति वे० ६ तच्च ज्ञानगतविषयगत-
भेदेन द्विविधं ल०त०श०[९० पृष्ठे] द्र०१४४७

**प्रत्यक्षप्रमा**—ज्ञानाकरणकं ज्ञानमिति न्या०१ विष-
यचैतन्याभिन्नं प्रमाणचैतन्यम् । अनुमित्यादाव-
तिव्याप्तिवारणाय विषयेति, भ्रमप्रत्यक्षेऽतिव्या-
प्तिव्यावृत्यर्थं प्रमाणेति २ यद्वा अनधिगताबा-
धितवर्तमानयोग्यविषयचैतन्याभिन्नं प्रमाणचैतन्य-
[२८ पृष्ठे] म् ३ अबाधितापरोक्षार्थविषयज्ञानमि-
त्यद्वैतकौस्तुभे ॥ १४९१ ॥

**प्रत्यक्षप्रमाणम्**—प्रत्यक्षप्रमाकरणम् । प्रमाकरणानु-
मानादावतिव्याप्तिवारणाय प्रत्यक्षेति, भ्रमप्रत्य-
क्षकरणेऽतिप्रसङ्गवारणाय प्रमापदम् १* इन्द्रिय-

सञ्चारमार्गेण बाह्यवस्तुसम्बन्धाच्चित्तस्येन्द्रियसन्निकृष्टार्थविशेषावधारणप्रधाना वृत्तिः, यथा घटोऽयमित्यादि इति साङ्ख्ययोगमते ॥ १४९३ ॥

**प्रत्यक्षबाधः**—तत्त्वमस्यादिवाक्योत्थात्मसाक्षात्कारेणाऽज्ञानतत्कार्यनिवृत्तिः ॥ १४९४ ॥

**प्रत्यभिज्ञाप्रत्यक्षम्**—तत्तेदन्तावगाहिज्ञानम् १ संस्कार (इन्द्रियसंप्रयोगोभयज० २) सन्निकर्षोभयजन्यं ज्ञानम्, यथा सोऽयं देवदत्त इति योग०॥१४९७॥

**प्रत्ययः**—प्रकृतिमवधीकृत्य विधीयमानः स्वार्थबोधकः शब्दविशेष इति शब्दार्थरत्नाकरे १ तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तदवधिकत्वेन विधीयमानत्वं प्रत्ययत्वम् ॥ १४९९ ॥

**प्रत्याहारः**—इन्द्रियाणां स्वस्वविष(यवैमुख्येनावस्थानम् १) येभ्यः प्रत्याहरणम् ॥ १४६१ ॥

**प्रधानम्**—सत्त्वरजस्त(मसां सा.)मोगुणसाम्यावस्था।

**प्रध्वंसाभावत्वम्**—जन्यत्वे सत्यविनाशित्वम् १ अविनाशित्वे सति प्रतियोगिसमवायिमात्रवृत्त्यभा-

वत्वं वा । अन्योन्याभाववारणाय मात्रेति, सामयिकाभावादिवारणायाविनाशित्वे सतीति ।

**प्रपञ्चः**—दृश्यत्वं जडत्वं परिच्छिन्नत्वं चिद्भिन्नत्वं च प्रपञ्चसामान्यलक्षणम् ॥ १४६६ ॥

**प्रमा**—अविसंवाद्यनुभव इति बौद्धाः १ अव्यभिचार्यनुभव इति भाट्टदेशीयः २ यथार्थानुभवः । यथार्थ इत्ययथार्थानां संशयविपर्ययतर्कज्ञानानां निरासः, अनुभव इति स्मृतेर्निरासः ३ प्रमाणजन्यं ज्ञानं वेति नै० ४ संशयविपर्ययविकल्पस्मृतिरूपचित्तवृत्तिभिन्ना या चित्तवृत्तिः सेति सां० ५ अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहेतुरिति यो० ६ बोद्धेद्धा वृत्तिर्वृत्तीद्धंबोधो वा ७ स्मृतिभिन्नत्वे सत्यबाधितार्थगोचरज्ञानं वेति वे० ८ सा द्विविधा जीवाश्रया ईश्वराश्रया चेति ल० तत्तच्छब्दे [५५–९०पृष्ठे] द्र० ॥ १४७४ ॥

---

१ बोधनेद्धा प्रकाशिता (प्रतिफलिता) वृत्तिः ।
२ वृत्तौ प्रतिबिम्बितं चैतन्यम् ।

**प्रमाणम्**—प्रमाकरणम्। छिदादिकरणकुठारादावति-व्याप्तिवारणाय **मा** पदम्, भ्रमज्ञानकरणदुष्टचक्षुरादावतिव्याप्तिवारणाय **प्र** पदम्, प्रमाप्रमाणमित्युक्तेऽसम्भवः स्यादतः करणमित्युक्तमित्यमरदासः १ व्यापारवत्तासम्बन्धेन प्रमितिविभाजकोपाध्यवच्छिन्नासाधारणकारणम्। चाक्षुषादिप्रमित्यसाधारणकारणे विषयेन्द्रियसंबन्धादौ व्यापारेऽतिव्याप्तिवारणाय **व्यापारवत्तासंबन्धेने**ति, अन्यप्रमाणस्यान्यप्रमाणत्वापत्तिवारणाय **विभाजकोपाध्यवच्छिन्ने**ति, चाक्षुषादावपि व्यापारवत्तासंबन्धेन मनसः कारणत्वात्तत्रातिव्याप्तिवारणाया**साधारणे**ति पु० २ असंदिग्धाविपरीतानधिगतविषयकबोधरूपप्रमाकरणम्। संशयविपर्ययस्मृतिकरणेष्वतिप्रसङ्गवारणायोपात्तं बोधरूपप्रमांशे क्रमशो विशेषणत्रयमिति यो० ३ साधनाश्रयाव्यतिरिक्तत्वे सति प्रमाव्याप्तत्वं प्रमाणत्वमिति सर्वद० ५ संवादिप्रवृत्तिजननयोग्यज्ञानजनकत्वमिति **ब्रह्मविद्या-**

भरणे ६ दोषासहकृतज्ञानकरणत्वमित्यद्वैतसिद्धौ ७ अज्ञात( अर्थ )ज्ञापकत्वमित्यद्वैतमते ८ प्रमीयतेऽनेनेति ॥ १४८२ ॥

**प्रमाणगतविपरीतभावना**—श्रुतीनामहेयानुपादेयब्रह्मप्रतिपादकत्वे निष्फलत्वप्रसङ्गाच्छ्रुतयः कर्मपरा एवेति निश्चयात्मिका चित्तवृत्तिः ॥१४८३॥

**प्रमाणगताऽसम्भावना**—ब्रह्मणो घटादिवत्सिद्धत्वेन मानान्तरगम्यत्वाच्छ्रुतिस्तत्प्रतिपादिका कथं भवेत्? फलाभावान्न भवेदेवेत्याकारिका चित्तवृत्तिः १४८४

**प्रमाणचैतन्यम्**—अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यम्

**प्रमाता**—प्रमाश्रयः १ प्रमाणैर्योऽर्थं प्रमिणोति सः

**प्रमातृचैतन्यम्**—अन्तःकरणविशिष्टचैतन्यम् १४८८

**प्रमादः**—कर्त्तव्येऽकर्त्तव्यत्वधिया ततो निवृत्तिः १ अकर्त्तव्ये कर्त्तव्यत्वधिया तत्र प्रवृत्तिर्वा २ प्रयत्नेन कर्तव्ये कार्ये विस्मृतिर्वा ॥ १४९१ ॥

**प्रमेयगतविपरीतभावना**-'योग्यं योग्येन संबद्ध्यते'

इति न्यायात्रिगुणात्मकप्रपञ्चोपादानं त्रिगुणात्मिका मायैव न ब्रह्मेति निश्चयात्मिका चित्तवृत्तिः १४९२

**प्रमेयगताऽसम्भावना**—ब्रह्मणस्सच्चिदानन्दरूपिणोऽनृतजडदुःखात्मकप्रपञ्चविलक्षणत्वेन तत्कारणत्वं कथं भवेत्? न भवेदेवेत्याकारिका चित्तवृत्तिः।

**प्रमेय विषयचैतन्यम्**—अज्ञातं घटाद्यवच्छिन्नचैतन्यम् १ विषयप्रकाशकं विषयाधिष्ठानभूतं चैतन्यं वा ॥ १४९९ ॥

**प्रमेयत्वम्**—प्रमाणजन्यज्ञानविषयत्वम् ॥ १४९६ ॥

**प्रयत्नः**—करोमीत्यनुभवविषयवृत्तिगुणत्वव्याप्यजातिमान् ॥ १४९७ ॥

**प्रयोगः**—शब्दादीनामुच्चारणम् ॥ १४९८ ॥

**प्रयोगविधिः**—प्रयोगप्राशुभावबोधको विधिः १ अङ्गानां क्रमबोधको विधिरिति ग्रं० ॥ १५०० ॥

**प्रयोजकः**—कार्यादौ भृत्यादीन् प्रयुनक्ति १ * साक्षात्परम्परया वा कारणत्वं प्रयोजकत्वम् २ अन्यथासिद्धिशून्यत्वे सति कार्याव्यवहितपूर्ववर्त्तित्वं वा।

**प्रयोजनत्वम्**—प्रवृत्तिहेत्विच्छाविषयत्वम्। ज्ञानसुखत्वादिवारणार्थं प्रवृत्तिहेत्विति १ बुद्धिविषयत्वे सति स्वसंबन्धितयेच्छाविषयत्वमिति ग्रं० १९०५

**प्रयोज्यत्वम्**—साक्षात्परम्परया वा जन्यत्वम् १९०६

**प्रलयः**—त्रैलोक्यनाश इति मायावादिनः १ भूतादिलयाधारकाल इति पौराणिकाः २ सकलभावकार्यविनाश इति ग्रं० ३ स च नित्यनैमित्तिकदैनिकमहाऽऽत्यन्तिकभेदात्पञ्चविधः, सुप्तिर्मूर्च्छामृतिःपुनःशरीरप्राप्तिर्दैनंदिनमिति प्रकारान्तरे। स्थूलशरीरान्निर्गमनं—**मृतिः**। शरीरवियोगक्षणमारभ्य पुनःसुखाद्युपलब्धिपूर्वक्षणपर्यन्तमवस्थितिः—पुनःशरीरप्राप्तिः शेषः त० श० [४८-१०२-१०८ ११३ पृष्ठे] द्र०॥१९०९॥

**प्रलापः**—निष्प्रयोजनानर्थकवाक्यम्॥ १९१०॥

**प्रवचनम्**—अर्थानुसन्धानपूर्वककथनम्॥१९११॥

**प्रवर्तकम्**—इष्टसाधनताविषयकं कृतिसाध्यताज्ञानमिति न्या० १ स्वविशेषणवत्ताप्रतिसन्धानजन्यं

कार्यताज्ञानमिति गुरवः २ अन्याप्रेरितत्वे सति तादृशलिङुच्चारयितृत्वमिति मता० ॥ १९१४ ॥

**प्रवर्तना**—प्रवृत्त्यनुकूलो व्यापारः ॥ १९१५ ॥

**प्रवृत्तिः**—स्वस्वविषये इन्द्रियादीनां सञ्चारः १* शब्दानामर्थबोधनशक्तिः २* रागजन्यो रागविषयको गुण इति नै० ॥ १९१८ ॥

**प्रशंसा**—गुणाविष्कारेण स्तुतिः ॥ १९१९ ॥

**प्रश्नः**—वाग्व्यवहारविशेषः १ प्रतिवचनानन्तरमाक्षेपोत्थानं वा २ अविज्ञातार्थज्ञानार्थमिच्छाप्रयोज्यवाक्यमिति बृह० ॥ १९२२ ॥

**प्रसङ्गत्वम्**—लक्ष्ये लक्षणसंबन्धत्वम् १* निरूपणयोग्यत्वम् २* स्मृतस्योपेक्षाऽनर्हत्वम् १९२६

**प्रसङ्गसङ्गतिः**—उपोद्घातभिन्नत्वे सत्यनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम् १९२७

---

१ स्मृतिविषयतापन्नत्वे सति द्वेषविषयतानापन्नत्वमित्यस्यार्थः गदाधरेणोक्तः।

**प्रस्तावना**—ग्रन्थावतारणार्थव्याख्यानांशः १ अमुख्यार्थप्रतिपादकत्वे सति मुख्यार्थ (उपोद्घातः२) प्रवर्तिका वा ॥ १९३० ॥ [र्यविनाशः

**प्राकृतप्रलयः**—कार्यब्रह्मविनाशनिमित्तकः सकलका-

**प्रागभावत्वम्**—ध्वंसप्रतियोगित्वे सत्यभावत्वम् १ अजन्यत्वे सति विनाशित्वम् । घटादिवारणाय सत्यन्तम्, परमाणुवारणाय विनाशित्वमिति म० २ कार्यसमवायिकालान्यावृत्तित्वे सति कार्योत्पत्तिपूर्वकालीनाभावत्वम्। ध्वंसेऽतिव्याप्तिवारणाय कार्योत्पत्तिपूर्वकालीनेति ग्रं० १९३४

**प्राग्लोपदोषः**—उत्तरोत्तरेणैव पूर्वपूर्वकार्यसम्भवे पूर्वेषामन्यथासिद्धिः ॥ १९३९ ॥

**प्राज्ञः**—सुषुप्तौ विलीनेऽन्तःकरणेऽज्ञानमात्रसाक्षी १ व्यष्टिकारणशरीरमात्रोपहितं चैतन्यमिति ग्रं० ।

**प्राणः**—शरीरान्तःसञ्चारी वायुः । महावाय्वादावतिव्याप्तिवारणाय विशेषणम्, मन आदिवारणाय विशेष्यम्, धनञ्जयवारणाय सञ्चारीति न्या० १

प्राग्गमनवान्नासाग्रवर्ती वायुरित्यपरे २ मिलितसमस्तापञ्चीकृतपञ्चमहाभूतराजसांशकार्यत्वे सति क्रियाशक्तिप्रधानवायुरिति वे० ३ हृदि प्राणो गुदेऽपानः समानो नाभिदेशगः, उदानः कण्ठदेशेस्याद् व्यानः सर्वशरीरगः ॥ १९४० ॥

**प्राणमयकोशः**—कर्मेन्द्रियैः सहितः प्राणः १९४१

**प्राणायामः**—प्राणवृत्तिनिरोधः १ निःश्वासोच्छ्वासयोर्गतिविच्छेदकारकव्यापारो वा २ रेचकपूरककुम्भकलक्षणः प्राणनिग्रहोपायः ॥ १९४४ ॥

**प्रातिपादिकम्**—अर्थवदधातुरप्रत्ययः १* विभक्त्यर्थशून्यत्वे सति व्यक्तिमात्रार्थत्वम् १९४६

**प्रातिभासिकत्वम्**—ब्रह्मज्ञानेतरबाध्यत्वमित्यद्वैतसिद्धौ १ आगन्तुक (=काचनिद्रादि) दोषसहकृताविद्याकार्यत्वमित्याशुबोधिन्याम् २ अज्ञातगोचरवृत्त्यनुपहितवृत्त्युपहितविशेषचैतन्यविषयत्वे सति विषयसत्ताप्रयोजकदर्शनविषयत्वमिति ग्रं० ।

---

१ उर्द्ध्वगमनवान् । २ विष्वग्गमनवान् ।

**प्रातिभासिकसत्त्वम्**—प्रतिभासकालाबाध्यत्वम्।

**प्रादुर्भावः**—प्रथमप्रकाशः १ पूर्वरूपरसादिनाशपूर्वकं रूपरसाद्यन्यतरोत्पत्तिर्वा ॥ १५५२ ॥

**प्रामाण्यम्**
**प्रमात्वम्**— } तद्वतितत्प्रकारकज्ञानत्वम्। इच्छावृत्तिवारणाय ज्ञानत्वमिति, भ्रमेऽतिप्रसङ्गवारणाय तद्वतीति ॥ १५५३ ॥

**प्रायश्चितम्**—पापक्षयमात्रसाधनं कर्म, यथा कृच्छ्रचान्द्रायणादि। मात्रशब्दात् तुलापुरुषाश्वमेधादिव्यावृत्तिः १ प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते, तपो निश्चयसंयुक्तं प्रायश्चित्तं तदुच्यते।

**प्रारब्धकर्म**—वर्तमानशरीरारम्भकं कर्म १ प्रारब्धकार्यसुखदुःखादिरूपं युगकल्पादिपर्यन्तमनुभोक्तव्यं येन तत् ॥ १५५७ ॥

**प्रीतिः**—दयारसार्द्रान्तःकरणवृत्तिविशेषः ॥ १५५९॥

**प्रेरकत्वम्**—तदनुकूलप्रयत्नाधारत्वम् १ प्रवृत्त्यनुकूलव्यापारसाधकत्वम् ॥ १५६२ ॥

**प्रैषः**—प्रमाणान्तरप्रमितेऽर्थे पुरुषप्रवर्तना १५६४

**प्रौढिवादत्वम्**—स्वबुद्ध्युत्कर्षख्यापनत्वम् १ प्रतिवाद्युक्तिस्वीकारत्वे सति स्वमत (उत्कर्षबोधन०) दोषपरिहारत्वं वा ॥ १९६६ ॥

**प्रौढोक्तिः**—उत्कर्षस्याहेतावुत्कर्षहेतुत्वकल्पनम् ।

## फ

**फलम्**—ससाधनसुखदुःखोपभोगः १ * प्रकरणप्रतिपाद्यस्य श्रूयमाणं तज्ज्ञानात्तत्प्राप्तिप्रयोजनम्, यथा "अथ सम्पत्स्य" इत्यद्वितीयज्ञानात्तत्सम्पत्तिरूपम ।

**फलचैतन्यम्**—ज्ञातं घटाद्यवच्छिन्नचैतन्यम् १ अन्तःकरणवृत्त्यभिव्यक्तं चैतन्यं वा २ विषयावच्छिन्नं चैतन्यमभिव्यक्तमिति म० १९७२ [यत्वम्

**फलव्याप्तिः**—स्वाकारवृत्तिप्रतिबिम्बितचैतन्यविष-

**फलव्याप्यत्वम्**—वृत्तिबिम्बितचिदभिव्यक्तचैतन्याश्रयत्वमित्यद्वैतदीपिकायाम् ॥ १९७९ ॥

---

१ अन्तःकरणवृत्त्यभिव्यक्तम्—घटादिविषयचैतन्याभिन्नमन्तःकरणवृत्तिप्रतिबिम्बितं चैतन्यम् ।

फलोपकारकाङ्गम्—स्वव्यापारातिरिक्तव्यवधानराहित्येन प्रधानोपकारकम्, यथा प्रयाजादि अदृष्टरूपेण स्वव्यापारमात्रेण प्रधानयागस्य॥१९७६॥

फलोपधायकत्वम्—कार्याव्यवहितपूर्ववृत्तित्वसम्बन्धेन फलविशिष्टत्वम्, यथा कुलालहस्तस्थदण्डः।

ब

बन्धः—सत्यत्वेन ज्ञायमानो दृश्यसंबन्धः १ आत्मनोऽज्ञानतत्कार्यसंबन्धो वा २ * अणिमाद्यष्टैश्वर्याशासिद्धसङ्कल्पः ३ देवमनुष्याद्युपासनाकामसङ्कल्पो वा ४ यमाद्यष्टाङ्गयोगसङ्कल्पो वा ५ वर्णाश्रमधर्मकर्मसङ्कल्पो वा ६ यागव्रततपोदानविधिविधानज्ञानसम्भवो वा ७ केवलमोक्षापेक्षा(क्षया) संकल्पो वा ८ सङ्कल्पमात्रसम्भवो वा ॥१९८६॥

बन्धुः—संबन्धेनोप(कारकः १) कर्ता ॥ १९८८ ॥

बलम्—विचित्रकार्यानुकूलशक्तिः ॥ १९८९ ॥

बहिरङ्गम्—बहिः प्रकृतेर्बाह्यमङ्गं यस्य ॥१९९०॥

**बहिर्मुखम्**—बहिः बाह्यविषये मुखं प्रवणता यस्य।

**बहुव्रीहिसमासत्वम्**—संबन्धिलाक्षणिकत्वव्याप्योत्तरपदकत्वम्, यथा केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं केशाकेशि, दण्डैश्च दण्डैश्च प्रहृत्य प्रवृत्तं युद्धं दण्डादण्डीत्यादिः ॥ १९९२ ॥

**बहूदकम्**—बहूनि उदकानि शौचाङ्गतया यस्य।

**बाधः**—पूर्वप्रत्ययस्य व्यधिकरणप्रकारकत्वनिश्चयः १ पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यको वेति न्या० २ अपरोक्षमिथ्यात्वनिश्चयः ३ सविलासाविद्यानिवृत्तिर्वा ४ प्रतीतार्थं परित्यज्यान्यार्थकल्पनमित्यद्वैतदीपि० ५ स त्रिविधः शास्त्रीयो यौक्तिकः प्रत्यक्षश्चेति ल०त०श०[१३१ पृ०]द्र०

**बाधसामानाधिकरण्यम्**—अन्यतरस्य बाधेन सामानाधिकरण्यम्, यथाऽभासवादिमतेऽन्तःकरणप्रतिबिम्बितस्य जीवस्य बाधेन ब्रह्मणा सामानाधिकरण्यम् ( अभेदः ), यथा वा जगतो बाधेन सर्वं

खल्विदं ब्रह्मेत्यादिश्रुत्युक्तं जगतो ब्रह्मणा सामानाधिकरण्यम् ॥ १५९९ ॥

बा(वधः)धा—प्राणवियोगफलकव्यापारः॥१६००॥

बालः—शास्त्रार्थज्ञानविवेकशून्यः १ अधीतव्याकरणकाव्यकोशोऽनधीतवेदान्तशास्त्रः । कणादादावतिव्याप्तिवारणायानधीतवेदान्तेति, स्तनंधयेऽतिप्रसक्तिवारणायाधीतव्याकरणेति वे० ।१६०१।

बाह्यप्रत्यक्षप्रमा—स्मृतिभिन्नत्वे सत्यबाधितबाह्यार्थगोचरज्ञानम् ॥ १६०२ ॥

बिम्बत्वम्—उपाधिनिमित्तस्वप्रतियोगिकव्याप्यवृत्तिभेदाश्रयत्वे सति औपाधिकपरिच्छेदरहितत्वमिति सं० टी० १ उपाध्यनन्तर्गतत्वे सति उपाध्यन्तर्गतरूपाभिन्नबहिःस्थितत्वमिति रत्नावल्याम्

बुद्धिः—निश्चयात्मिकान्तःकरणवृत्तिरिति वे० १ जानामीत्यनुव्यवसायविषयगुण इति न्या० १६०६

बृंहणत्वम्—शरीरवृद्ध्यादिहेतुत्वम् ॥ १६०७ ॥

**ब्रह्मचर्यम्**—उपस्थसंयमः १ अष्टाङ्गमैथुनवर्जनं वा ।

**ब्रह्म**—निखिलनामरूपात्मकप्रपञ्चाकारेण परिणममानमायाऽधिष्ठानम् १ बृहत्त्वं बृंहणत्वं वा १६ १२

**ब्रह्मणस्तटस्थलक्षणम्**—जगदुत्पत्तिस्थितिलयकारणत्वम् १ जगज्जन्माद्यभिन्ननिमित्तोपादानकारणत्वं वा २ भूतोपादानत्वे सति कर्तृत्वम् । कुलालादावतिव्याप्तिपरिहाराय भूतेति, मायायामतिव्याप्तिनिवृत्तये कर्त्रिति वे०तत्त्वविवेके ३ निखिलजगदुपादानत्वम् । शुक्त्यवच्छिन्ने चैतन्येऽतिव्याप्तिवारणाय निखिलेति, असम्भववारणाय जगत्प-

---

१ स्त्रिया दर्शनं(=रागपूर्वकं स्त्र्यादिविषयकज्ञानम् १) स्पर्शनं(=रागपूर्वकं क्रियाविशेषजन्यं ज्ञानम् २) केलिः (=रागपूर्वकः परिहासादिव्यवहारः ३) कीर्तनं (=रागपूर्वकं सौन्दर्यादिवर्णनम् ४) गुह्यभाषणं(=रागपूर्वकं रहसि सम्भाषणम् ५) सङ्कल्पः(=इयं मे स्यादिति ६) अध्यवसायः(=अनया रमिष्ये इति निश्चयः ७) क्रियानिर्वृत्तिः(=अनुभवविशेषः ८) चेत्यष्टौ मैथुनस्याङ्गानि ।

दमिति पु० ४ सकलकार्योपादानगोचरापरोक्षज्ञानाश्रयत्वे सति सकलकार्योपादानगोचरचिकीर्षाश्रयत्वे सति सकलकार्योपादानगोचरकृत्याश्रयत्वमित्यमरदासः ॥ १६१७ ॥

**ब्रह्माण्डम्**—स्वावरणभूतलोकालोकपर्वततद्बाह्यपृथिवी तद्बाह्यसमुद्रैः सहिता ॥ १६१८ ॥

**ब्रह्मानन्दः**—द्वैतभानाभावविशिष्टनिद्राऽभावकालीनब्रह्माभिमुखवृत्त्यभिव्यङ्ग्यानन्दः ॥ १६१९ ॥

**ब्राह्मणत्वम्**—ब्राह्मणेतरावृत्तित्वे सति सकलब्राह्मणव्यक्तिवृत्तित्वम् १ तपःश्रुतं च योनिश्च ह्येतद्ब्राह्मणकारणम्, तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥ १६२१ ॥

**ब्राह्मणभागः**—कर्मविधायकं वाक्यम् १ मन्त्रतात्पर्यार्थप्रकाशको वेदभागो वेति ऋग्वेदभाष्ये माधवाचार्यैः २ वेदत्वे सति मन्त्रभिन्नत्वम् । कल्पसूत्रादिवारणाय वेदत्वे सतीत्युमापतिः ३ तच्च

त्रिविधं विधिरूपमर्थवादरूपं तदुभयविलक्षणञ्च ल० त० श० [ ३९ पृष्ठे ] द्र० ॥ १६२४ ॥

ब्राह्मणस्यविद्वत्संन्यासः—अपरोक्षात्मविद्विहितत्वे सति ससाधनवैधाखिलकर्मत्यागपूर्वकसलिङ्गकत्वमिति जी०वि०टी० ॥ १६२५ ॥

भ

भक्तिः—आराध्यत्वेन ज्ञानम् १आराविषयकरागत्वं भक्तित्वमिति शाण्डिल्यसूत्रभाष्ये ॥ १६२७ ॥

भयम्—विषयविशेषदर्शनश्रवणनिबन्धनश्चेतसोऽनवस्थानम् ॥ १६२८ ॥

भागत्यागलक्षणा—शक्यैकदेशपरित्यागेनैकदेशे वृत्तिः, यथा "तत्त्वमसी"त्यादिवाक्ये सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धांशपरित्यागेन चिन्मात्रयोरभेदः १शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका लक्षणेति न्या० १६३० [ ग्रन्थः

भारतम्—भरतवंश्यानधिकृत्य कृतो लक्षश्लोकात्मको

**भारतवर्षम्**—उत्तरेण समुद्रस्य हिमाद्रेश्चैव दक्षिणे, वर्षं तद्भारतं नाम भारती यत्र सन्ततिः १६३२

**भावत्वम्**—समवायैकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वमिति न्या० १ विधिमुखप्रतीतिविषयत्वम् २ प्रतियोग्यनपेक्षनिरूपणत्वं वेति वे०॥ १६३५ ॥

**भावना**—भवितुर्भवनानुकूलो भाव( यितुर्व्यापारः ) कव्यापारविशेषः। सा द्विधा शाब्दीभावना आर्थीभावना चेति ल०त०श०[५१पृष्ठे] द्र०॥१६३६

**भावनासंस्कारः**—जन्यज्ञानजन्यसंस्कार इति नवीनमते १ पूर्वानुभवजन्यः स्मृतिहेतुः संस्कारः। आत्मादिवारणाय प्रथमदलम्, अनुभवध्वंसवारणाय द्वितीयदलमिति प्राचीनमते ॥ १६३८ ॥

**भावविकारः**—पूर्वावस्थापरित्यागे सत्यवस्थान्तरा-

---

१ भावः—क्रिया निर्वर्त्यो योऽर्थः क्रियैव वा, क्रियायाः फलं वा यथा ओदनं पचति देवदत्तः।

पत्तिः। जायतेऽस्ति[1] वर्द्धते[2] परिणमतेऽपक्षीयते[3] विनश्यतीतिभेदात् षड्विध इति **निरुक्ते** ॥१६३९॥

भाविकालः- भविष्यत्त्वम् } सूर्यपरिस्पन्दादिक्रियाप्रागभावावच्छिन्नः कालः १ वर्तमानप्रागभावप्रतियोगित्वमिति **सारमञ्जर्याम्** १६४१ [येति वा

**भाषा**—प्रतिज्ञासूचकवाक्यम् १ भाषणं, भाष्यतेऽन-

**भाष्यम्**—सूत्रार्थो वर्ण्यते यत्र वाक्यैः ( पदैः ) सूत्रानुसारिभिः, स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः। सागरादिवर्णनस्य भाष्यत्वव्यावृत्तये **सूत्रार्थेति**, पदवृत्तिव्यावृत्तये **वाक्यैरिति**, वार्तिकस्य तत्त्वनिरासाय **सूत्रानुसारिभिरिति**, वृत्तेस्तत्त्वव्यावृत्त्यर्थमुक्तं **स्वपदानीति** पाराशरोपपुराणे

**भिक्षा**—ग्रासमात्रमन्नम् १ ग्रासमात्रं भवेद्भिक्षा पु-

---

१ अस्ति—जातस्य कार्यस्य क्षणमवस्थानम्। २ वर्द्धते—शरीरस्य भूयोभिरवयवैः संबन्धः। ३ अपक्षीयते—भूयोभिरवयवैर्विश्लेषः शेषस्तत्तच्छब्दे [ ८५-११९ पृष्ठे ] द्र०।

ष्कलं तु चतुर्गुणम्, पुष्कलानि च चत्वारि हन्तकारो विधीयते ॥ १६४८ ॥

**भिक्षुः**—भिक्षोपजीवी १ भिक्षाकारकः २ चतुर्थाश्रमी वा ३ यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः, अध्वगः क्षीणवृत्तिश्च षडेते भिक्षवः स्मृताः ॥ भिक्षत इति ॥ १६५१ ॥

**भूतकालः—**
**अतीतत्वम्** } सूर्यपरिस्पन्दादिक्रियाध्वंसावच्छिन्नः कालः १ वर्तमानध्वंसप्रतियोगि(समयवृत्ति)त्वम् २ तद्वृत्तित्वे सति आरब्धपरिसमाप्तत्वं भूतत्वम् ॥ १६५६ ॥

**भूतत्वम्**—बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्। आत्मन्यतिव्याप्तिवारणाय बहिः पदम्, कालादावतिव्याप्तिवारणाय विशेषेति, द्रव्यत्वमादायातिव्याप्तिवारणाय गुणेति १ आत्मान्यत्वे सति विशे०।

**भूतप्रतिबन्धः**—पूर्वानुभूतविषयस्यावशेन पुनः पुनः स्मरणम् ॥ १६५९ ॥

**भूतार्थवादः**—प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबो-

धकोऽर्थवादः,यथा इन्द्रो वृत्राय वज्रं(उदय.)अयच्छदित्यादिरिति मी० १ तत्काले तद्गुणज्ञापकः शब्द इति न्या० ॥ १६६१ ॥

भूमिका—अन्यरूपेऽन्यप्रवेश इति नाटकज्ञाः १ हर्म्यादेरुत्तरोत्तरभूमिवच्चित्तज्ञानान्यतरस्यावस्थाविशेषः ॥१६६४॥ [शेषः॥१६६५॥

भूरादिलोकः—प्राणिनां कर्मज्ञानफलभोगस्थानवि-

भेदः—पृथक्करणम् १ अन्योन्याभावो वा॥१६६७॥

भेदाभावः—मानाभावादयुक्तेश्च न भिदेश्वरजीवयोः, जीवानामचितां चैव नात्मनो न परस्परमिति भेदधिक्कारे ॥ १६६८ ॥

भोक्ता—सुखदुःखाकारवृत्त्युपहितं चैतन्यम् १६६९

भोगः—सुखदुःखान्यतरसाक्षात्कारः ॥ १६७० ॥

भोग्यम्—सुखदुःखान्यतरसाक्षात्कारिज्ञानविषयः(सुखादिः) ॥ १६७१ ॥

भोजनम्—कठिनद्रव्यस्य गलबिलाधःसंयोजनम् ।

भ्रमः—अतस्मिँस्तद्ग्रहः १ दोषजन्यज्ञानम् २ नि-

ष्फलप्रवृत्तिजनको बोधो वेति वे० ३ स्वव्य-
धिकरणप्रकारावच्छिन्नविषयताप्रतियोगिज्ञानमिति
चिन्तामणौ ४ तदभाववति तत्प्रकारकं ज्ञान-
मिति ग्रं० स द्विविधः सोपाधिको निरुपाधिक-
श्चेति ल० त० श० [१११ पृष्ठे] दृश्यम् १६७७
**भ्रान्तिः**—अतात्त्विकान्यथाभावेन वस्त्ववगाहनम् ॥

**म**

**मङ्गलम्**—अभीष्टार्थसिद्धिः १ अभिप्रेतार्थसिद्धिर्वा
२ * समाप्तिप्रतिबन्धकीभूतदुरितविशेषविघात-
कत्वं मङ्गलत्वम् ३ विघ्नभिन्नत्वे सति विघ्नध्वंस-
प्रतिबन्धकाभावभिन्नत्वे सति प्रारिप्सितविघ्नध्वं-
सासाधारणकारणत्वमिति पु० ४ तच्च आशी-
र्वादनमस्कारवस्तुनिर्देशभेदात्त्रिविधं ल०त० श०
[९२-१०६ पृष्ठे] द्र०॥ १६८२ ॥
**मतम्**—सम्मतम् १ अभिप्रेतज्ञानं वा ॥ १६८४ ॥
**मत्सरः**—स्वसमानसंपत्तिदर्शनाऽसहनम् १ परोत्क-
र्षासहनपूर्वकस्वोत्कर्षवाञ्छेति ग्रं० ॥१६८६॥

**मदः**——मत्सदृशः कोऽवेति चित्तवृत्तिः १) ऽस्तीति हर्षबुद्धिः २ विद्यादिनिमित्तात्स्वस्मिन्नाधिक्यबुद्धिरिति ग्रं० ॥ १६८९ ॥

**मध्यस्थः**—विवदमानयोः सदसद्वाक्यविचारकः १ यद्वा विवदमानयोरुभयोरपि पक्षपाती हितैषी वा।

**मननम्**—श्रुतस्यार्थस्योपपत्तिभिश्चिन्तनम् १ द्वितीयाध्यायोक्तार्थासत्त्वशङ्कानिवर्तकयुक्त्यनुसन्धानमित्यद्वैतसिद्धौ २ शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापार इति वे०परिभाषायाम् ३ अपरे तु बाधकसाधकप्रमाणाभ्यां श्रुतितात्पर्यनिर्णयः ४ साधकबाधकप्रमाणोपन्यासरूपयुक्तिभिः श्रुत्यर्थानुचिन्तनमिति तर्कमते ॥ १६९० ॥

**मनः**—सङ्कल्पविकल्पात्मवृत्तिमदन्तःकरणम् १ अपञ्चीकृतभूतकार्यत्वे सति ज्ञानकर्मोभयकरणत्वं मनस्त्वमिति वे० २ सुखदुःखादिसाक्षात्कारकारणत्वे सतीन्द्रियम्। आत्ममनःसंयोगादिवारणायेन्द्रिय-

मिति, चक्षुरादिवारणाय सुखेति ३ स्पर्शरहितत्वे सति क्रियावत्त्वमिति तर्कदीपिकायाम् ४ द्रव्यसमवायिकारणत्वरहिताणुसमवेतद्रव्यत्वापरजातिरिति सर्वद० ५ मननात् ॥ १७०२ ॥

मनुष्यः–मनोरपत्यम् १७०३ [रिणामः

मनोनाशः–वृत्तिरूपपरिणामत्यागेन निरोधाकारप-

मनोमयः–मनोऽतिरिक्तोपाधिशून्यः ॥ १७०५ ॥

मनोमयकोशः–कर्मेन्द्रियैः सहितं मनः ॥१७०६॥

मनोव्यसनम्–चौर्यादीच्छाहेतुभूतं व्यसनम् ।

मन्त्रः–यत्राभियुक्तानां मन्त्रप्रसिद्धिः स इति शास्त्रदीपिकायाम् १ प्रयोगसमवेतार्थस्मार(कत-यार्थवत्त्वम्२) को वाक्यविशेष इति मी० न्यायप्रकाशे ३ स च ऋग्यजुःसामभेदात्त्रिविधः ल० त०श०[६६ पृष्ठे] द्र० ॥ १७१० ॥

मन्त्रभागः—अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशक इति प्रस्थानभेदे मधुसूधनः १ याज्ञिकैः समाम्नातोनुष्ठेयार्थप्रकाशको वेदभागः २ मन्त्रविधानप्रतिपा-

दुक्तो वेदभागो वेति सर्ववेदभाष्यकारः २ वेदत्वे सति ब्राह्मणभिन्नमिति स०धर्मोद्धारे ॥१७१४॥

**मन्दवैराग्यम्**—पुत्रदारादिविषयवियोगे धिक्संसारमिति बुद्ध्या विषयजिहासा इति त्रिवर्णसंन्याससारसङ्ग्रहे ॥ १७१९ ॥

**मरणावस्था**—चरमशरीरप्राणसंयोगध्वंसः १* देहादिनामुपात्तानां परित्यागः २ पूर्वविद्यमानदेहेन्द्रियवियोगो वेति ग्रं० ॥ १७१८ ॥

**मर्यादा**—न्यायपथस्थितिरिति नीतिशास्त्रज्ञाः१७१९

**मलमासः**—रविसंक्रान्त्यभावविशिष्टचान्द्रमास इति श्राद्धविवेकटीकायाम् १ स्वाव्यवहितप्राक्क्षणावच्छेदेन रविभुज्यमानराशीयरविसंयोगविशिष्टस्वान्तिमक्षणकत्वम् । भानुलंघितेऽतिव्याप्तिवारणाय औत्पत्तिकभिन्नत्वेन विशेषणीयमिति मलमासतत्त्वटीकायाम् ॥ १७२१ ॥

**मलिनवासना**—ज्ञानप्रतिबन्धकीभूता । सा त्रिवि-

धा लोकवासना शास्त्रवासना देहवासना चेति ल० त०श०[१०२पृष्ठे] द्र०॥ १७२२ ॥

**महत्त्वम्**—त्रिविधपरिच्छेदशून्यत्वम् ॥ १७२३ ॥

**महापुरुषः**—महान्कामादिभिरक्षुभितमानसः १७२४

**महाप्रकरणम्**—फलभावनायाः प्रकरणम् ॥१७२५॥

**महा/ब्रह्म प्रलयः**—सर्वभावकार्यध्वंसः १* जन्यभावानधिकरणकाल इति पौराणिकाः २ ब्रह्मणो नाशावस्थाऽस्मिन्प्रलयेऽज्ञानमेव परिशिष्यते इति मोहनलालः ॥ १७२८ ॥

**महाभारतम्**—महत्त्वत्वे सति भारत [१४८पृ०]म्

**महामोहः/रागः**—साधनरहितस्यापि सर्वसुखजातीयं मे भूयादिति विपर्ययविशेषः ॥ १७३० ॥

**महावाक्यम्**—तत्त्वं पदार्थैक्यबोधकवाक्यमित्यद्वैतमते १ परस्परसंबद्धार्थकम् २ वाक्यसमुदायरूपत्वे सति एकवाक्यं वेति मी०॥ १७३३ ॥

**महाविद्याऽनुमानत्वम्**—पक्षे प्रकारान्तरेण साध्योपसंहारशालित्वे सति दृष्टान्ते प्रकारान्तरेण साध्यो-

पसंहारशालित्वमिति न्यायमकरन्दटिप्पण्यां बाल-
रामः ॥ १७३४ ॥

**मात्रा**–ह्रस्ववर्णोच्चारणकालः १* ओङ्कारोच्चारण-
कालः २ स्वजानुमण्डलं पाणिना त्रिःपरामृश्य
च्छोटिकावच्छिन्नः कालो वेति यो० ॥१७३७॥

**मानः**–सर्वत्राप्रणतिभावः १ पुरुषान्तरेण सम्पादितः
सत्कारो वा २ अविवेकिनाऽभ्युत्थानाभिवादनपू-
र्वकत्वे सति कायकपूजात्वं मानत्वम् ॥१७४०॥

**मानसजपः**–जिह्वोष्ठादिव्यापाररहितं शब्दार्थयोश्चि-
न्तनम् ॥ १७४१ ॥ [ त्वम्

**मानित्वम्**–विद्यमानैरविद्यमानैर्वा गुणैरात्मश्लाघि-

**माया**–हृदयेऽन्यथा कृत्वा बहिरन्यथा व्यवहरणम्
१* स्वाश्रयाव्यामोहकरी २ रजस्तमोऽनभिभूत-
शुद्धसत्त्वप्रधाना इति ग्रं० ३ विपरीतप्रवृत्तिहेतुत्वे
सति विषयोपादानत्वे सति विक्षेपशक्तिप्रधानत्व-
मिति पु० ४ निरूपयितुमशक्यत्वे सति विस्पष्टं

भासमानत्वम् । आत्मन्यतिव्याप्तिवारणाय सत्य-न्तमिति ग्रं०॥ १७४७ ॥

मित्रम्—स्नेहेनोपकारकः १ उपकारमनपेक्ष्योपकर्तृ वा

मिथ्यात्वम्—ज्ञानबाध्यत्वमिति विवरणे २ ब्रह्म-भिन्नत्वमिति परिमले ४ प्रतिपन्नोपाधौ त्रैकालिक(अत्यन्ताभावप्रतियो.५) निषेधप्रतियोगित्वम् । असद्व्यावर्तनाय प्रतिपन्नोपाधाविति विशेषणम्, प्रागभावादिप्रतियोगित्वमादायांशतः सिद्धसाधन-वारणाय त्रैकालिकेति, इदं लक्षणं चित्सुखीसि-द्धान्तलेशाद्वैतसिद्ध्यादिषु दृष्टम् ६ ज्ञानातिरि-क्तानिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वम् ७ यद्वा ज्ञाना-घटितसामग्र्यनिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वम् । घटं नाशयामीति ज्ञानपूर्वकं मुद्गरपातादिना तन्नाश-दर्शनात् तद्वारणाय सत्यन्तम्, आत्मन्यतिव्याप्ति-वारणाय विशेष्यमिति ग्रं० ८ स्वाऽनधिकर-

---

१ ज्ञानाघटिता तदसम्बद्धा या सामग्री तदनिवर्त्यत्वे सतीत्यर्थः ।

णाऽनधिकरणात्यन्ताभावप्रतियोगित्वमिति वे० तत्त्वविवेके ९ सद्विलक्षणत्वे सत्यपरोक्षप्रतीतिविषयत्वम् १० असत्त्वाविशेषेऽपि कदाचित्प्रतीयमानत्वं वा। गगनकमलादावतिव्याप्तिवारणाय कदाचिदिति वे०मुक्तावल्याम् ११ स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वम्। अभिमतपदमसम्भववारणाय, यावत्पदमर्थान्तरवारणायेति वे०परिभाषायाम् १२ एकावच्छेदेन स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगिमित्यद्वैतकौस्तुभे १३ पारमार्थिकत्वावच्छिन्नप्रतियोगिताकस्वात्यन्ताभावसामानाधिकरण्यमिति चूडामणौ १४ अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमद्वयम्, अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा।

**मिश्रितकर्ममध्यमम्**—स्वाश्रमोचितकाम्यकर्मानुष्ठानादियोग्यशरीरप्रापकम् ॥ १७६४ ॥

**मिश्रितकर्मसामान्यम्**—चाण्डालव्याधाद्यधमशरीरप्रापकम् ॥ १७६५ ॥

मिश्रितकर्मोत्कृष्टम्—निष्कामकर्मानुष्ठानादियोग्यशरीरप्रापकम् ॥ १७६६ ॥

मीमांसा—विचारपूर्वकतत्त्वनिर्णयः १ * वेदार्थकर्मनिर्णायको ग्रन्थः २ * वेदवाक्यविचारः ३ कर्मब्रह्मविषयसंशयनिवारको ग्रन्थो वा ॥ १७७० ॥

मुक्तत्वम्—पुनः संसाराभाववत्त्वम् १ अविद्याकामकर्मपारतन्त्र्यरहितत्वं वा । [मिति मुक्तिवादे

मुख्यप्रयोजनत्वम्—अन्येच्छाऽनधीनेच्छाविषयत्व-

मुख्यसामानाधिकरण्यम्—अज्ञानोपहितस्य जीवस्याऽबाधेन ब्रह्मणा सामाधिकरण्यम् ॥१७७४॥

मुदिता—पुण्येष्वभ्युत्थानासनादिभिः सत्कारः ।

मुनित्वम्—मननशीलत्वम् १ वेदार्थमननशीलत्वं वा २ निरन्तराद्वितीयार्थमननशीलत्वमिति म० ३ दुःखपङ्कमग्नजगदुद्दिधीर्षुत्वम्, यथा शौनकादिरिति ग्रं०

मुमुक्षा—हे धातः संसारबन्धनान्मम मोचनं कदा भविष्यतीतीच्छा ॥ १७८० ॥

मुमुक्षुः—स्वात्मानं द्वैतबन्धान्मोक्तुमिच्छुः १ मोक्षेच्छावत्त्वं मुमुक्षुत्वम् ॥ १७८२ ॥

मूढः—कर्तृत्वाद्यहङ्कारभावारूढः ॥ १७८३ ॥

मूढावस्था—निद्रातन्द्रादिग्रस्तावस्था ॥ १७८४ ॥

मूर्खत्वम्—हिताहितज्ञानशून्यत्वम् १ लोकवेदविरुद्ध(पक्षाव०)आचरणावलम्बित्वम् ॥ १७८६ ॥

मूर्च्छावस्था—मुद्गरादिप्रहरणानन्तरं विशेषविज्ञानोपरमावस्था ॥ १७८७ ॥

मूर्तत्वम्—क्रियाश्रयत्वम् १ क्रियावद्द्रव्यत्वं वा २ परिच्छिन्नपरिमाणवद्द्रव्यत्वमिति ग्रं० ॥१७९०॥

मृत्युः—विजातीयात्ममनःसंयोगनाशः ॥ १७९१ ॥

मेधा—अनेकश्रुतग्रन्थार्थधारणशक्तिः ॥ १७९२ ॥

मेधावी—गुरूपदिष्टपदार्थग्रहणधारणपटुः ॥१७९३॥

मैत्री—परानुद्वेगजनिका वृत्तिः १ सुखिष्वात्मीयत्वभावनमित्यादर्शे ॥ १७९५ ॥

मोक्षः } मुक्तिः } उत्तराधरभावेन निरन्तरोत्पादक्लेशादिदोषदूषितत्रोभवसन्ततिविच्छेद इति माध्यमिकमते

३ पुनर्भावनाप्रकर्षपरिलब्धपरिशुद्धचित्तसन्तानमिति योगाचारमते ४ प्रलीननिखिलोपाधेः क्षेत्रज्ञस्य सततोर्द्ध्वगतिरिति जैनमते ५ अक्षयशरीरादिलाभ इति वैष्णवकापालिकयोर्मते ६ आत्यन्तिकैकविंशतिदुःखध्वंसः १६ स्वसमानाधिकरण(दुरितप्रागभावसमानकालीनदुरितध्वंसः १७) दुःखप्रागभावसमानकालीनदुःखध्वंसो वा । संसारकालीनदुःखध्वंसस्य मोक्षत्ववारणाय कालीनान्तं दुःखविशेषणम्, अस्मदीयदुःखसमानकालीनशुकमोक्षेऽव्याप्तिवारणाय स्वसमानाधिकरणेतिदुःखविशेषणमिति तार्किकमते १८ प्रकृतिपुरुषविवेकदर्शनात्तदविवेकनिवृत्तौ पुरुषस्य स्वरूपेणावस्थानमिति साङ्ख्ययोगमते २४ निखिलदुःखनिवृत्तिपुरस्सरं स्वात्मानन्दावाप्तिः २७ विद्यानिरस्ताविद्यातत्कार्यब्रह्म( भात्रापत्तिः २८ )आत्मनावस्थानं वा । तस्य वस्तुत एकत्वेपि दुःखानन्दरूपप्रति-

योगिद्वैविध्याद्वैविध्यमुक्तम् । यद्वा जीवन्मुक्तिर्विदेहमुक्तिश्चेति भेदान्मुक्तिर्द्विविधेति वेदान्तिमते इति सिद्धान्तदीपे ॥ १८२४ ॥

**मोहः**—हितेष्वहितबुद्धिरहितेषु हितबुद्धिः १८२६

**मोहनिवृत्त्युपायः**—सत्येन यथार्थज्ञानरूपेण विवेकेन मोहस्य निवृत्तिः ॥ १८२७ ॥

**मौनम्**—वाग्व्यापारराहित्यम् १ वाक्संयमः २ वाक्संयमहेतुर्मनःसंयमो वेति म० ३ वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते, प्रपञ्चो यदि वक्तव्यः सोपि शब्दविवर्जितः । इति वा तद्भवेन्मौनं सर्वं सहजसंज्ञितम्, गिरां मौनं तु बालानामयुक्तं ब्रह्मवादिनाम् । तच्चाकारमौनकाष्ठमौनभेदन द्विविधं ल०त०श०[४९—७९पृष्ठे] द्र० ॥ १८३० ॥

**म्लेच्छः**—गोमांसखादको यस्तु विरुद्धं बहु भाषते, सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयत इति बौद्धयनः ॥ १८३१ ॥

## य

**यजुः**—अनियताक्षरपादावसानम् १ वृत्तगीतिवर्जि-तत्वे सति प्रश्लिष्टपठित(१९७९)मन्त्रो वा यथा "अग्नीदग्नीन्विहरे"त्यादिरिति न्यायमालायाम्।

**यजुर्वेदः**—यजुर्बहुलो वेदः १ यजुरवयवको वेदो वा २ यजुर्विनियोजको वेदो वा ३ यजुर्द्रव्यको वेदो वेति न्यायसुधायाम् ॥ १८३७ ॥

**यज्ञः**—देवतोद्देशेन हविस्त्याग इति निरुक्ते १ यूप-सम्बन्धरहितत्वे सति शास्त्रविहितकर्मविशेषः २ स द्विविधः श्रौतः स्मार्त्तश्चेति। तत्र श्रौतोऽग्निहो-त्रादिः, स्मार्तः पञ्चयज्ञादिः ॥ १८३९ ॥

**यतमानवैराग्यम्**—अस्मिन्संसारे इदं सारमिदमसा-रमिति सारासारविवेकः ॥ १८४० ॥

**यतिचान्द्रायणम्**—एकमासं प्रत्यहं मध्यानकालेऽ-ष्टाष्टपिण्डाशनम् ॥ १८४१ ॥

**यथार्थज्ञानम्**—अदुष्टसामग्रीजन्यं ज्ञानम् १८४२.

**यथार्थनिश्चयः**—अविसंवादिज्ञानम् ॥ १८४३ ॥

**यथार्थानुभवः**—फलवत्प्रवृत्तिजननयोग्यम्, यथा रजते इदं रजतमिति ज्ञानम् ॥ १८४४ ॥

**यथेष्टाचरणम्**—स्वेच्छया निषिद्धविषयभोक्तृत्वम् १ शास्त्रमर्यादोल्लङ्घकत्वं वा ॥ १८४६ ॥

**यमः**—अहिंसादिपरिग्रहः १ मनोमात्रसाध्यत्वे सति निवृत्तिलक्षणयोगाङ्गविशेष इति ग्रं० २ अहिंसाद्यन्यतमत्वम् ३ हिंसादिभ्यो निषिद्धधर्मेभ्यो योगिनं यमयति निवर्तयतीति। यमफलानि सकामानां योगशास्त्रे कथितानि तथा हि—अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः, 'क्रियाफलाश्रयत्वम्' 'सर्वरत्नोपस्थानम्' 'वीर्यलाभः' 'जन्मकथन्तासम्बोधः

**यागः**—मन्त्रकरणकः १ वह्न्याद्यधिकरणं वा २ देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छात्वमिति दिनकर्याम् ३ सयूपत्वे सत्यन्त्याहुतित्वम्। अग्निहोत्रवारणाय सयूपेति, देवगृहस्थण्डिलविशेषयोर्वारणायान्त्याहुतीति ग्रं० ॥ १८९४ ॥

---

१ देवतोद्देश्यकत्वम्—देवतास्वत्ववद्विशेष्यकत्वम्।

**युक्तयोगी**—सर्वदा(पदार्थज्ञानवान् १)समाधिमान्योगी
**युक्तिः**—अर्थावधारणम् १ स्वपक्षसाधकविपक्षबाधकप्रमाणोपन्यासो वा ॥ १८५९ ॥
**युञ्जानयोगी**—कादाचित्कसमाधिमान्योगी १८६१
**युद्धम्**—परस्पराभिघातार्थं शस्त्रादिक्षेपणव्यापारः।
**योगत्वम्**—अलब्धलाभत्वम् १* कामादिरूपचित्तवृत्तिनिरोधत्वम् २ यद्वा स्वरूपावस्थितिहेतुचि० ३ दैवासुरवृत्तीनां निरोधत्वमित्य० ४ क्लेशकर्म(आदिपरिपन्थित्वे सति चित्त० इति विज्ञानभिक्षुः ५) विघटकत्वे सति चित्तवृत्तिनिरोधत्वम्। क्षिप्तमूढादिषु माभूद्योगत्वमिति सत्यन्तनिवेशस्तथा च तत्र वृत्तिनिरोधसत्त्वेपि क्लेशकर्माद्यविघटकत्वात्तस्य न तेषु योगत्वम्, विवेकख्यातावपि तद्विघटकत्वात्तद्वारणाय निरोधान्तमिति योगमञ्जर्याम् १८६८
**योगरूढिः**—योगार्थवृत्तिरूढिः, यथा पङ्कजादिपदेषु।

---

१ प्रमाणविपर्ययविकल्पनिद्रास्मृत्यादि।

योगशक्तिः—अवयवशक्तिः, यथा पाचकादिपदानाम्।

योग्यत्वम्—अन्यतरोपस्थितावन्यतरस्याबाधितत्वम्।

योग्यता—बाधकप्रमाणाभावः १ * वाक्यार्थाबाधः २ तात्पर्यविषयसंसर्गाबाधो वा, यथा पयसा सिञ्चति ३ एकपदार्थेपरपदार्थसम्बन्ध इति न्या० ॥१८७६॥

योग्यानुपलब्धिः—अभावप्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितोपलब्धिरूपप्रतियोगिकानुपलब्धिः, यथा भूतले घटो नास्तीति प्रतीतिसिद्धघटाभावप्रतियोगिनो घटस्य यद्यत्र घटः स्यादितिप्रसञ्जनेन (आपादनेन) तर्ह्युपलभ्येदिति प्रसञ्जितोपलब्धिरूपप्रतियोगिका घटस्यानुपलब्धिस्तया भूतले घटभावप्रमा जायते इत्यद्वैतग्रन्थे १ अत्र यदि प्रतियोगी स्यात्तदोपलभ्येत इत्याकारकतर्कसहकृतप्रतियोग्युपलम्भाभाव इति न्या० ॥ १८७८ ॥

योनिजशरीरम्—शुक्रशोणितयोः परस्परमेलनजन्यं शरीरम् १ तद्द्विविधम्—जरायुजमण्डजञ्चेति।

**यौक्तिकबाधः**–मृद्व्यतिरेकेण घटाभावनिश्चयवन्निखिलकारणीभूतब्रह्मव्यतिरेकेण प्रपञ्चाभावनिश्चयः।

**यौगिकः**–प्रकृतिप्रत्ययद्वारार्थवाचकः शब्दः १ अवयवशक्त्यर्थशक्तिद्वाराबोधकः शब्दो वा, यथा प्रियः सुखद इत्यादिः १८८२ [दादिपदम्

**यौगिकरूढिः**–योगार्थभिन्नार्थवृत्तिरूढिः, यथोद्भि-

## र

**रजस्त्वम्**–प्रेरकत्वे सति सक्रियत्वे सति दुःखहेतुत्वम्

**रतिः**–बाह्यसाधननिरपेक्षा ॥ १८८९ ॥

**रसः**–रसनेन्द्रियमात्रग्राह्यो गुणः ॥ १८८७ ॥

**रसनम्**–रसोपलब्धिसाधनमिन्द्रियम् । रसनेन्द्रियरससंबन्धादावतिव्याप्तिनिरासायेन्द्रियमिति।

**रसास्वादः**–विक्षेपनिवृत्तिजन्यानन्दानुभवः १ समाध्यारम्भसमये ब्रह्मानन्दानवाप्तौ स्थूलवृत्त्यभावानन्दास्वाद इति ग्रं० ॥ १८९० ॥

**रागः**–उत्कटेच्छा १ स्त्र्यादिष्विष्टसाधनताबुद्ध्या

स्नेहो वा २ प्राप्ते विषयक्षयकारणे सत्यपि न क्षीयतामित्येवमाकारश्चित्तवृत्तिविशेष इति ग्रं० ।

रामायणम्–रामचरितमधिकृत्य कृतो ग्रन्थः १८९५

रूढः–प्रकृतिप्रत्ययार्थमनपेक्ष्य समुदायशक्त्यर्थबोधकः शब्दः, यथा गोवृक्षादिः ॥ १८९६ ॥

रूढिः–समुदायशक्तिः, यथा घटादिपदानाम् १८९७

रूपम्–चक्षुर्मात्रग्राह्यो गुणः । सङ्ख्यादिवारणाय मात्रपदम्, प्रभावारणाय गुणपदम् ॥ १८९८ ॥

रेचकप्राणायामः–पीतस्य वायोर्द्वात्रिंशन्मात्राभि-

रोगः–धातुवैषम्यहेतुको व्याधिः । [स्त्यागः

## ल

लक्षकः–लक्षणयाऽर्थबोधकः शब्दः १ तीरादिसंबन्ध्यनुभावको वा ॥ १९०३ ॥

लक्षणम्–असाधारणधर्मः १ असाधारणधर्मप्रतिपादकं वाक्यमिति ग्रं० २ समानासमानजातीयव्यवच्छेदकत्वं लक्षणत्वम् । 'नीलमुत्पलमि' त्यत्र सजातीयमात्रव्यवच्छेदके विशेषणेऽतिप्रसङ्ग-

वारणाया समानजातीयेति, रूपं गुण इत्यादौ विजातीयद्रव्यव्यवच्छेदकधर्मेऽतिव्याप्तिवारणाय समानजातीयेतीति साङ्ख्यग्रन्थे ३ अव्याप्त्यतिव्याप्त्यसम्भवदोषत्रयशून्यत्वम्, यथा गोः सास्नादिमत्त्वमिति न्या० ४ सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्धाकारत्वमिति माधवीयन्यायमालायाम् ५ लक्ष्यतावच्छेदकसमनियतत्वम्। लक्ष्यतावच्छेदकसमनियतत्वं नाम लक्ष्यतावच्छेदकेन सह समव्याप्तिकत्वम्, यथाऽन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यमिति प्रमातृलक्षणे यत्र यत्रान्तःकरणावच्छिन्नचैतन्यत्वं तत्र तत्र प्रमातृत्वं यत्र यत्र च प्रमातृत्वं तत्र तत्रान्तःकरणावच्छिन्नचैतन्यत्वमिति लक्ष्यतावच्छेदकेन प्रमातृत्वेन सह लक्षणस्य समव्याप्तिरिति वे० १९०९

**लक्षणप्रयोजनम्**—व्यावृत्तिर्व्यवहारो वा १९११

**लक्षणा**—बोध्यसंबन्ध इति मी० १ शक्यसम्बन्धः २

स्वशक्तिज्ञाप्यसंबन्ध इति ग्रं० २ सा द्विविधा केवललक्षणा लक्षितलक्षणा चेति ल०त०श० [७६–१७२ पृष्ठे] दृश्यम् ॥ १९१४ ॥

लक्षितः—लक्षणया बोधितार्थः ॥ १९१५ ॥

लक्षितलक्षणा—शक्यपरम्परासंबन्धः, यथा द्विरेफो रौतीति वाक्ये द्विरेफस्य भ्रमरपदे संबन्धस्तस्य च मधुकरे १ शक्यपरम्परासम्बन्धेनार्थान्तरप्रतीतिरिति पु०॥१९१७॥ [क्षितुं योग्यम् ।

लक्ष्यम्-वक्तृतात्पर्यविषयत्वे सति शक्यसंबद्धम् १ ल-

लज्जा—अकृत्यप्रवृत्तिः १ कालविशेषदेशविशेषावच्छेद्यजनविशेषसन्निधानप्रयोज्यकार्यविशेषगता कर्तव्यत्वबुद्धिरिति ग्रं०॥ १९२३ ॥

लयः—अखण्डवस्त्वनालम्बनेन चित्तवृत्तेर्निद्रा १* उपादानकारणविद्यमाने सति कार्यतिरोधानमात्रम्

लाक्षणिकः—लक्षणयाऽर्थबोधकः शब्दः ॥१९२६॥

लाघवत्वम्—लघोर्भावत्वम् ॥ १९२७ ॥

लिङ्गम्—व्याप्त्याश्रयः १ व्याप्तिविशिष्टपक्षधर्मता-
विशिष्टहेतुर्वेति न्या० २ शब्दसामर्थ्यम्। सामर्थ्यं
लिङ्गमित्युक्तेऽङ्कुरादिजननानुकूलबीजादिसामर्थ्ये
तत्प्रसङ्गः स्यात्तद्वारणाय शब्देति विशेषणम् ३ अर्थ-
प्रकाशसामर्थ्यमिति मी० ४ प्राकृतगुणगतावस्था-
त्मको धर्म इति वैयाकरणाः ५ पुंसोऽसाधारणचिह्नम्।
लिङर्थत्वम्—कार्यबुद्धिगोचरत्वे सति प्रवर्तकत्वमिति
तत्त्वदीपने ॥ १९३४ ॥
लेखकः—शीर्षोपेतान् सुसम्पूर्णान् समश्रेणिगतान्
समान्, अक्षरान् ( वर्णान् हि ) विलिखेद्यस्तु स
लेखक इति स्मृतः ॥ १९३६ ॥

लेशाऽविद्या—प्रारब्धकार्यसम्पादनपटीयानविद्याया
अवस्थाविशेषः १ क्षालितलशुनभाण्डानुवृत्तलशु-
नवासनाकल्पोऽविद्यासंस्कारो वा २ प्रारब्धकर्मव-
र्तमानदेहाद्यनुवृत्तिप्रयोजको विक्षेपशक्त्यंशो वा।
लोकः—प्राणिनां कर्मज्ञानफलभोगस्थानविशेषः।

**लोकवासना**—सर्वे जना यथा मां न निन्दन्ति यथा वा स्तुवन्ति तथैव सर्वदाचरिष्यामीत्यशक्यार्थाभिनिवेशः १ लोकानुभवजनितत्वे सति लोकस्यैव पुनः पुनः (रञ्जनाद्यर्थम्) स्मरणहेतुरित्यादर्शे २ सम्पादयितुमशक्यत्वात्पुरुषार्थानुपयोगित्वाच्च लोकवासनामलिना ॥ १९४२ ॥

**लोकसङ्ग्रहः**—स्वयं सदाचारप्रवृत्तत्वे सति लोकानां सदाचारप्रवर्तकः १९४३ [क्षुत्वम्

**लोभत्वम्**—स्वद्रव्यापरित्यागे सति परद्रव्यजिघृ-

**लोभनिवृत्त्युपायः**—अस्तेयेनापरिग्रहेण सन्तोषेण दानेन वा लोभस्य निवृत्तिः ॥ १९४५ ॥

**लौकिकगुणाधानदेहवासना**—समीचीनशब्दादिविषयसम्पादनम् ॥ १९४६ ॥

**लौकिकदोषापनयनदेहवासना**—चिकित्सकोक्तैरौषधै(र्मुखादिप्रक्षालनम् १ ) र्व्याध्याद्यपनयनम् ।

**लौकिकीशाब्दीप्रमा**—आप्तवाक्यजन्या प्रमा ।

व

वक्तृतात्पर्यम्—पुरुषाभिप्रायः। तज्ज्ञानं वाक्यार्थज्ञाने न कारणम्, तदभावेऽप्यव्युत्पन्नवाक्याद्वाक्यार्थज्ञानदर्शनात् १ तदर्थप्रतीतीच्छयोच्चरितत्वमिति तर्कामृते ॥ १९९१ ॥

वञ्चकः—अन्यथास्थितस्य वस्तुनोऽन्यथारूपेण कथादिनाऽन्यमोहोत्पादकः ॥ १९९२ ॥

वञ्चनम्—स्वार्थसिद्धिव्याजेन वशीकरणम् १ अन्यथास्थितस्य वस्तुनोऽन्यथारूपेण कथनादिनान्यमोहोत्पादनमिति बृहदभिधाने ॥ १९९४ ॥

वर्तमानकालः—सूर्यपरिस्पन्दादिक्रियावच्छिन्नः काल इति वे० १ स्वध्वंसप्रागभावानधिकरणकालवृत्तित्वं वर्तमानत्वमिति प्राञ्चः २ नव्यास्तु शब्दप्रयोगाधाराऽऽरब्धापरिसमाप्तकालः ३ क्रियायाः प्रारम्भतः समाप्तिपर्यन्तं प्रारम्भसमाप्त्यभिव्याप्यवृत्तिमान्काल इति वैयाकरणाः ॥ १९९८ ॥

वर्तमानप्रतिबन्धः—वर्तमानकालीनत्वे सति तत्त्व-

ज्ञानप्रतिरोधः । स च विषयासक्तिप्रज्ञामान्द्यकुत-र्कविपर्ययदुराग्रहभेदाच्चतुर्विधः ॥ १९९९ ॥

**वशीकारवैराग्यम्**—ऐहिकामुष्मिकविषयजिहासा ।

**वस्तुनिर्देशमङ्गलम्**—स्वेष्टतमदेवतागुणगणोक्तिः ।

**वस्तुपरिच्छेदः**—अन्योन्याभावप्रतियोगित्वम् १ यत्किञ्चिद्वस्त्वनात्मत्वमिति ग्रं० ॥ १९६३ ॥

**वाक्**—वचनक्रियासाधनमिन्द्रियम् ॥ १९६४ ॥

**वाक्यम्**—पदस(मुदायः १)मूहः । घटादिसमूहवार-णाय पदेति २ आकाङ्क्षायोग्यतासन्निधिमत्पदस-मुदायः । विलम्बोच्चारितपदसमुदायेतिव्याप्तिवार-णाय **सन्निधी**ति, अग्निना सिञ्चेदिति वाक्येऽति-व्याप्तिव्यावृत्त्यर्थं योग्येति, गौरश्वः पुरुषो हस्तीत्य-त्रातिव्याप्तिवारणायाकाङ्क्षेत्यद्वैतकौ० ३ शाब्द-प्रतीतिजन्यशाब्दप्रतीतिजनकं पदात्मकमिति चि-

---

१ कुतर्कः—प्रतिपादितस्यार्थस्य विपरीतग्रहणम् ।

२ विपर्ययः—अहं श्रोत्रियः पण्डितोहं विरक्तोहमिति देहेन्द्रियादावात्मत्वबुद्धिः ।

त्सु० ४ समभिव्याहार इति मी० ९ स्वार्थबोधसमास इति वैया० ॥ १९७० ॥

**वाक्यैकवाक्यत्वम्**—प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वमिति वे० परि० १ अङ्गबोधकवाक्यस्याङ्गीबोधकवाक्येन सहैकवाक्यत्वमिति ग्रं०॥१९७४॥

**वाचकत्वम्**—पुराणादिपाठकत्वम् १ * पदार्थस्मृतिजनकत्वम् २ पदार्थविषयप्रतीतिविषयत्वमिति म०

**वाच्यत्वम्**—पदजन्यप्रतीतिविषयत्वम् ॥ १९७८ ॥

**वाञ्छा**—इष्टसाधनताधीजन्याभीष्टविषयचित्तवृत्तिः।

**वादः**—तत्त्वबुभुत् (सुना सह कथा २) सोः कथा ३ तत्त्वनिर्णयफलः कथाविशेष इति सर्वद० १९८३

**वादित्वम्**—विचारस्थले वादकथाकर्तृत्वम् १ प्रथमपक्षप्रतिपादकत्वमिति व्यवहारशास्त्रज्ञाः १९८९

**वानप्रस्थाश्रमः**—गृहस्थाश्रममपहाय गृहीतमुनिवृ-

---

१ समभिव्याहारः—साध्यत्वादिवाचकद्वितीयाद्यघटितत्वे सति तात्पर्यलब्धशेषशेषिभावबोधकपदयोः सहोच्चारणम्।

त्तिरसंन्यस्तः। स च वैखानसऔदुम्बरबालखिल्यफेनपभेदाच्चतुर्विधः ॥ १९८६ ॥

**वायुः**—शब्दस्पर्शगुणकः १* रूपरहितत्वे सति स्पर्शवानिति नै० ॥ १९८८ ॥

**वार्तिकम्**—उक्तानुक्तदुरुक्तार्थव्यक्तकारि १ उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते, तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः ॥ १९९१ ॥

**वासना**—अनुभवजन्या स्मृतेर्हेतुः १ पूर्वापरपरामर्शं विना सहसोत्पद्यमानस्य क्रोधादिवृत्तिविशेषस्य हेतुश्चित्तगतः संस्कारविशेष इति ग्रं० २ सुषुप्त्यवस्थागता धीसूक्ष्मावस्था इति पु० ३ स्वस्वदेशाचारकुलधर्मभाषास्वभावभेदतद्गतापशब्दसुशब्दादिषु प्राणिनामभिनिवेशः सामान्येनोदाहरणम्। सा द्विधा—अशुभा शुभा चेति ल० तत्तच्छब्दे [ ४१ पृष्ठे ] द्रष्टव्यम् ॥ १९९४ ॥

**वासनाक्षयः**—विवेकजन्यचित्तप्रशमवासनादार्ढ्येन बाह्यनिमित्ते सत्यपि क्रोधाद्यनुत्पत्तिः ॥१९९५॥

**वासनानन्दः**—ब्रह्मध्यानादेर्व्युत्थितस्य या आनन्दस्य वासनाः ॥ १९९६ ॥

**विकल्पः**—शब्दज्ञानानुपातीवस्तुशून्यः २ वस्तुशून्यत्वे सति स्वविरोध्युत्तरज्ञानाबाध्यत्वमिति यो०

**विकारः**—जन्यत्वे सत्यजनक इति सां० १पूर्वावस्थापरित्यागे सत्यवस्थान्तरापत्तिरिति वे०। २००१

**विकृतिः**—तत्त्वानारम्भकम् १ जन्यत्वे सति जनको वेति सां० २ यत्र न समग्राङ्गोपदेशः ३ आतिदेशिकेतिकर्त्तव्यताकत्वं विकृतित्वमिति मी०।

**विक्षेपः**—कार्यव्यासङ्गमुद्भाव्य कथाविच्छेदः १* पुनः पुनर्विषयानुसन्धानम् २* अखण्डवस्त्वनालम्बनेन चित्तवृत्तेरन्यालम्बनम् ॥ २००८ ॥

**विक्षेपशक्तिः**—आकाशादिविविधकार्यजननानुकूलमज्ञानसामर्थ्यम् ॥ २००९ ॥

**विग्रहः**—(वृत्यर्था०)समासार्थावबोधकं वाक्यम् १ समासादिवृत्तिसमानार्थकवाक्यमिति ग्रं० २०११

---

१ आदिपदेन विषयध्यानस्य सुषुप्तेश्च परिग्रहः।

**विघ्नत्वम्**—कार्योत्पादप्रयोजकीभूतधर्मविघटकत्वम् ।

**विचारः**—प्रमाणेन तत्त्वपरीक्षा १ तात्पर्यनिर्णयानुकूलयुक्त्यनुसन्धानं वा ॥ २०१४ ॥

**विच्छेदः**—एकजातीयद्रव्यगुणादीनामन्यजातीयेन व्यवधानम् २०१५ [शिलादितः २०१६

**विजातीयभेदः**—विरुद्धजातिकृतो भेदः, यथा वृक्षस्य

**विज्ञानमयकोशः**—ज्ञानेन्द्रियैः सहिता बुद्धिः ।

**वितण्डा**—स्वपक्षस्थापनही(ना विजिगीषुकथा १)नः कथाविशेषः २ स्वपक्षस्थापनाराहित्येन परपक्षनिराकरणवाक्यं वा ॥ २०२० ॥

**विदेहमुक्तिः**—तत्त्वज्ञानिनो भोगेन प्रारब्धकर्मक्षये वर्तमानशरीरपातः १ भाविशरीराऽनारम्भो वा ।

**विद्या**—पुरुषार्थसाधनम् १ * जीवब्रह्मणोरभेदगोचरान्तःकरणवृत्तिः २ अध्यस्तनिषेधकत्वे सत्यधिष्ठानस्वरूपनिर्धारणं वा ॥ २०२५ ॥

**विद्यामदः**—मत्सदृशः को वेत्त्यहं पण्डितो न मत्तोऽन्यः पण्डितोऽस्तीति मनसोऽभिनिवेशः ॥२०२६॥

विद्यामदनिवृत्त्युपायः—अहं कः मत्तोऽप्यधिकाः पण्डिता बहवः सन्ति तस्मान्मामपि कश्चित्पण्डितः पराभविष्यतीति निरन्तरञ्चिन्तनम् ॥ २०२७ ॥

विद्वत्संन्यासः—गृहस्थाश्रमादौ कृतश्रवणादिभिरुत्पन्नसाक्षात्कारेण गृहस्थादिना चित्तविश्रान्तिलक्षणां जीवन्मुक्तिमुद्दिश्य क्रियमाणः संन्यासः १ अपरोक्षतत्त्वविद्विहितत्वे सति ससाधनवैधाखिलकर्मत्याग इति जी०वि०टीकायाम् ॥ २०२९ ॥

विधिः—पुरुषप्रवर्त्तकं वाक्यम् १ इष्टसाधनताबोधक-( वाक्यम् २ ) प्रत्ययसमभिव्याहृतवाक्यमिति गौ०वृ०३ अज्ञातार्थज्ञापको वेदभाग इति म०४ अप्राप्तप्रापको विधिरिति वैदिकाः ५ शब्दभावना विधिरिति भाट्टाः ६ नियोगो विधिरिति प्राभाकराः ७ इष्टसाधनता विधिरिति तार्किकादयः ८ स द्विविधः—अभिधानोऽभिधेयश्च । आद्य उत्पत्त्यधिकारविनियोगप्रयोगभेदाच्चतुर्विधः । अपूर्वविधिनियमविधिपरिसङ्ख्याविधिभेदाद्विधिः त्रिविध इति

वे०ग्रन्थे। एषां लक्षणानि त०श०[१३-२९-३२-९७-११०-१२१-१३६-१८२ पृष्ठे]द्र०

विनिगमनाविरहः } एकतरपक्षपातियुक्तिविर (हत्वम्)-
अविनिगम्यत्वम् } हः ॥ २०३८ ॥

**विनियोगविधिः**—अङ्गप्रधानसंबन्धबोधको विधिः, यथा दध्ना जुहोतीति ॥ २०३९ ॥

**विपरीतभावना**—अतस्मिँस्तद्बुद्धिः, यथा देहे आत्मत्वबुद्धिः १ सा द्विधा प्रमाणगता प्रमेयगता चेति ल०तत्तच्छब्दे[१३९पृ०] दृश्यम् ।२०४०।

**विपर्ययः**—बाध्यमानं ज्ञानम् १ अतस्मिँस्तत्प्रत्यय इत्युद्योतकाचार्यः ॥ २०४२ ॥

**विप्रतिपत्तिः**—संशयजनकवाक्यम् १ परस्परविरुद्ध-(कोटिद्वयप्रतिपादकं वाक्यम् २) अर्थप्रतिपादकवादिवचनं वा ॥ २०४६ ॥

**विप्रलिप्सा**—अन्यथा प्रतीतस्यार्थस्यान्यथा (बोधयितुमिच्छा १) प्रतिपिपादयिषा प्रतारणा सा।

विभागः–परस्परासङ्कीर्णव्याप्यधर्मकथनम् १ सा-मान्यधर्मव्याप्यधर्मान्यतरकथनं वा २* संयो-गनाशको गुणः ३ संयोगसमानाश्रयत्वे सति संयो-गनाशक इति मानमनोहरकारः ४ जन्यद्रव्यवृ-त्तित्वे सति स्वसमानाधिकरणाभावप्रतियोगिसंयो-गभिन्नगुण इति ग्रं०॥ २०५३ ॥

विभुत्वम्–परममहत्त्वम् १ सर्वदेशवृत्तित्वं वेति वे० २ सर्वमूर्त्तद्रव्यसंयोगित्वमिति न्या०॥ २०५६ ॥

विरक्तः–अनतुरक्तः १ विषयवासनाराहित्यं वा २ स्वस्वरूपातिरिक्तरतिरहितत्वं विरक्तत्वम् ३ लौकि-कवैदिककर्मरागशून्यत्वे सति स्वस्वरूपज्ञानवत्त्व-मिति पु०॥ २०६० ॥ [ष्वरुचिः २०६२

विरागः–इहामुत्र(फलभोगोपेक्षाबुद्धिः१) अर्थभोगे-

विराट्–वैश्वानरः } पञ्चीकृतभूतकार्यसमष्टिस्थूलशरीरः १ स-मष्टिस्थूलसूक्ष्मकारणशरीरोपहितं चैतन्य-मिति ग्रन्थान्तरे ॥ २०६४ ॥

विरुद्धत्वम्–एकाधिकरणावृत्तित्वम् ॥ २०६५ ॥

विरोधः—एकावच्छेदेनैकाधिकरणकत्वाभावः १ सहानवस्थानयोरेकदेशे समावेशो वा ॥ २०६७ ॥
विवरणम्—व्याख्यानग्रन्थव्याख्यानम् १* तत्समानार्थकपदान्तरेण तदर्थकथनम् २ समानार्थबोधकपदान्तरेण तदर्थकथनमिति पुस्तकान्तरे २०७१
विवर्तः—पूर्वावस्थाऽपरित्यागेनावस्थान्तरापत्तिः १ पूर्वरूपापरित्यागेनासत्यनानाकारप्रतिभास इति ग्रं० २ उपादानविषमसत्ताकत्वे सत्यन्यथाभावः। उपादानत्वाभिमतमृद्वस्तुसत्ताविषमसत्ताकत्वं चैतन्यस्याप्यस्तीति तस्य मृद्वस्तुविवर्तत्ववारणाय विशेष्यम्, परिणामवारणाय सत्यन्तमिति त्रिविधसत्तावादे ३ एकसत्त्वपक्षे तु उपादानविलक्षणत्वे सत्यन्यथाभावः। उपादानत्वाभिमतजडविलक्षणे चैतन्ये जडविवर्तत्ववारणाय विशेष्यम्, मृत्परिणामे घटादौ मृद्विवर्तत्ववारणाय सत्यन्तम् ४ उपादानत्वाभिमतवस्तुनः सकाशाद्वस्तुतो भेदाभेदाभ्यां दुर्निरूपत्वे सति कार्यम्। अविद्याया-

मतिव्याप्तिवारणाय विशेष्यम्, आरम्भवादे उपादानादभेदेन दुर्निरूपकार्येऽतिव्याप्तिवारणाय भेदेत्युक्तम्, परिणामवादे उपादानाद्भेदेन दुर्निरूपकार्येऽतिव्याप्तिवारणायाभेदेनेत्युक्तम्, सिद्धान्ते कार्यकारणयोरभेदोपगमादसम्भववारणाय वस्तुत इत्युक्तमस्मिँल्लक्षणे कार्यत्वमविवक्षितम्, अनाद्यविद्यादेरपि विवर्तत्वाङ्गीकारादिति वेदान्तसि० लेशटीकायाम् २०७६ [पान्तरेण कथनम्।

**विवर्तवादः**—अधिष्ठानस्वरूपमपरित्यज्य दोषवशाद्रू-

**विवादः**—विरुद्धो वादः ॥ २०७८ ॥

**विविदिषा**—सद्यः स्वतत्त्वसाक्षात्कारकरणैकपरायणत्वं जनयत्स्वचित्तवृत्तिः। मुमुक्षोरष्टाङ्गयोगैकतत्परत्वं जनयन्त्यां वृत्तौ व्यभिचारवारणाय सद्य इति पदम्, साक्षात्कारतदिच्छयोः क्रमाद्बोधयितुं स्वपदद्वयम्, अद्वैतब्रह्मेतरवस्तुप्रत्यक्षहेतुताद्दग्वृत्तावतिव्याप्त्यभावार्थं तत्त्वेति, साक्षात्कारस्थले

ज्ञानेत्युक्तौ परोक्षज्ञानकारणनिरुक्तवृत्तावतिप्रसङ्गस्तद्वारणाय साक्षात्कारेति, तथा करणस्थले हेतुपदनिवेशे कर्मणां शान्त्यादीनामपि बहिरङ्गान्तरङ्गहेतुत्वेन तादृक्स्थले व्यभिचारपरिहारार्थं करणेति, एकपदं लौकिकव्यापारान्तरव्युदासाय, परायणपदं वैदिककर्मरत्यभावार्थम्, जनयदिति प्रतिबन्धराहित्यार्थम्, चित्तेति पराभिमतात्मधर्मेच्छाव्यावृत्त्यर्थम् ॥ २०७९ ॥

**विविदिषासंन्यासः**—विवेकादिसाधनसम्पन्नेन तत्त्वज्ञानमुद्दिश्य क्रियमाणः संन्यासः १ स द्विविधः जन्मापादककाम्यकर्मादित्यागमात्रात्मकः प्रैषोच्चारणपूर्वकदण्डधारणाद्याश्रमरूपश्च । तत्र भगवदाज्ञापालनमात्रबुद्ध्या स्वीयनित्यादिश्रौतस्मार्तानुष्ठानपूर्वकमवशिष्टाखिलकर्मतत्साधनधनाद्यनादरदार्ढ्यमाद्यः, धर्मपत्न्यादिप्रतिबन्धाभावे सति यथाविधिप्रैषोच्चारणपूर्वकदण्डकमण्डलुकाषायाङ्कि-

तकन्थाकौपीनद्वयाचारवस्त्रैकशाट्याख्यत्रहिर्वासा-
त्मकवसनपञ्चक(धारण)इतरपरिग्रहराहित्यमन्त्यः।

**विवेकः**—नित्यानित्यवस्तुवि(चारः)वेचनम् २०८१

**विशिष्टत्वम्**—विशेषणयुक्तत्वम् ॥ २०८२ ॥

**विशिष्टाद्वैतम्**—विशिष्टं च (व्याकृतनामरूपविशिष्टं चिदचित्) विशिष्टं च (अव्याकृतनामरूपविशिष्टं चिदचित्) विशिष्टे, तयोरद्वैतम् ॥ २०८३ ॥

**विशेषत्वम्**—अल्पव्यापकत्वम् १ * स्वतो व्यावर्तकत्वम् २* निःसामान्यत्वे सत्येकमात्रसमवेतत्वम् ३ यद्वा परमसीमावर्त्तित्वे सति नित्यद्रव्यमात्रवृत्तित्वम्

**विशेषणत्वम्**—व्यावर्तकत्वम् १ प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकत्वम् २ स्वकालनियतव्यावृत्तिबोधजनकत्वं वेत्यद्वैतरत्नरक्षणे मधुसूदनः ३ कार्यान्वयित्वे सति कार्यकाले नियमेन वर्तमानत्वे सति व्यावर्तकत्वम्, यथा नीलरूपादिकं घटस्य

---

१ शिखासूत्रादि। २ स्वतोऽव्यावर्तकत्वम्—स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातीयेतरभेदानुमित्यविषयत्वम्।

४ प्रतीयमानवैशिष्ट्यप्रतियोगित्वमिति नील-
कण्ठ्याम् ५ तद्विविधं केवलविशेषणं लक्षणरूपवि-
शेषणञ्च। सजातीयमात्राद्व्यावर्तकं केवलम्, स्वेत-
रकृत्स्नव्यावर्तकं लक्षणरूपमिति सायणाचार्यैः।

**विशेष्यत्वम्**—व्यावर्त्यत्वम् १* प्रतीयमानविशिष्ट-
संबन्धानुयोगित्वमिति कुसुमाञ्जल्याम्॥२०९४॥

**विशेषणविशेष्यभावसम्बन्धः**—मिथो विशेष्यविशे-
षणयोरनुलोमप्रतिलोमतया विशेष्यविशेषणत्वे।

**विशेषाहङ्कारः**—ब्राह्मणोहं क्षत्रियोहमित्याद्यभिमा-
नात्मिका चित्तवृत्तिः ॥ २०९६ ॥

**विश्रामः**—प्रवृत्तव्यापारस्यावसानम् ॥ २०९७ ॥

**विश्वजीवः**-जागरे व्यष्टिस्थूलशरीराभिमानी १ व्यष्टि-
स्थूलसूक्ष्मकारणशरीरत्रयोपहितं चैतन्यमिति ग्रं०

**विश्वव्यसनम्**-गृहक्षेत्रादिसम्पादनेच्छाहेतुर्व्यसनम्

**विषयः**—विचारार्हं वाक्यम् १ विचारविषयकं वाक्यं
वेति न्यायमा. २ शास्त्रजप्रमानिवर्त्याज्ञानगोचरः ३*
पदवाच्यम् ४* ज्ञायमानत्वे सति भोगोपयोगी ५

शरीरेन्द्रियभिन्नत्वे सति साक्षात्परम्परया वोपभो-गसाधनत्वे सति जन्यद्रव्यत्वं विषयत्वम् । शरीरादावतिव्याप्तिनिरासाय शरीरेन्द्रियभिन्नत्वे सतीति, परमाण्वादावतिव्याप्तिवारणाय द्वितीय-सत्यन्तम्, कालादिवारणाय जन्यद्रव्यत्वमिति ग्रं०

विषयगतपरोक्षता विषयाप्रत्यक्षत्वम् } योग्यविषयस्यानावृतसंवित्तादात्म्याभावत्वम् ॥ २१०८ ॥

विषयगतापरोक्षता विषयप्रत्यक्षत्वम्— } ज्ञानाकारार्पणक्षमो हेतुत्वम् । चक्षुरादिवारणायाकारसमर्पकत्वविशेषणमिति सौगताः १ इन्द्रियजन्यज्ञानविषयत्वमिति नै० २ प्रमातृसत्ताऽभिन्नसत्ताकयोग्यत्वे सति स्वाकारवृत्त्युपहित( प्रमातृचैतन्य 'अभिन्नत्वम् ३' सत्तातिरिक्तसत्ताशून्यत्वम् ४ ) साक्षिचैतन्याध्यस्तत्वम् ५ तत्तदर्थस्य स्वव्यवहारानुकूलचैतन्य (अनावृतविषय)अभेदत्वमित्यद्वैतविद्याचार्यः २११४

**विषयवासना**—शब्दादिविषयाणां भुज्यमानत्वदशाजन्यः संस्कारः ॥ २११५

**विषयानन्दः**—तत्तत्स्रक्चन्दनवनितादिविषयाकारै-काग्रबुद्ध्यभिव्यङ्ग्यानन्दः २११६ [नुमानम्

**वीतानुमानम्**—अन्वयमुखेन प्रवर्त्तमानं विधायकम-

**वृत्तिः**—१ शाब्दबोधानुकूलस्मारकत्वप्रयोजकमूलसं-बन्धः २ शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलः पद-पदार्थयोः स्मार्यस्मारकभावसंबन्ध इति ग्रं० ३ वि-षयचैतन्याभिव्यञ्जकोऽन्तःकरणाज्ञानयोः परिणाम-विशेषः । व्यावहारिकघटपटाद्यर्थाकारवृत्तावन्तःक-रणस्य परिणामात्मिका वृत्तिः प्रातिभासिकशुक्ति-रजताद्यर्थाकारवृत्तौ त्वज्ञानस्य परिणामात्मिका वृत्तिरिति विभागः । क्रोधादिवृत्तावतिव्याप्तिवार-णार्थं विषयचैतन्याभिव्यञ्जक इत्युक्तम्, चक्षु-रादौ विषयचैतन्याभिव्यञ्जकेऽतिव्याप्तिवारणार्थम-न्तःकरणाज्ञानयोः परिणामविशेष इति वे० ४ सा द्विविधा प्रमाऽप्रमा चेति लक्षणतत्तच्छब्दे [३० १३३ पृष्ठे] द्रष्टव्यम् ॥ २१३२ ॥

**वृत्तिविषयत्वम्**—शक्तिलक्षणाकृत्तद्धितान्तसमासानामन्यतमज्ञानाधीनज्ञानविषयत्वमिति **गौडब्रह्मा.**

**वृत्तिव्याप्तित्वम्**—विशिष्टशब्दादिप्रमाणबलात्तत्तद्विषयाकारधीसमुन्मेषाभिव्यक्तत्वमिति वेदान्तसारटीकायां रामतीर्थः ॥ २१३४ ॥

**वेगसंस्कारः**—क्रियाजन्यत्वे सत्यन्यक्रियाजनकः । गुरुत्वादिवारणाय सत्यन्तम्, विभागादिवारणाय विशेष्यदलम् ॥ २१३५ ॥

**वेदः**—अपौरुषेयं वाक्यम् । भारतादावतिव्याप्तिवारणायापौरुषेयमिति विशेषणम्, आत्मादौ तद्दोषवारणाय वाक्यमिति विशेष्यम् १ यद्वा सम्प्रदायानुसारेण स्वरादिविशिष्टा या वर्णानुपूर्वी परिपाटी स इति मी० २ इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति सः । अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्येते इति कृष्णयजुरैतरेयब्राह्मणयोर्भाष्यभूमिकायां सायणाचार्येणोक्तम् ३ धर्मब्रह्मप्रतिपादकमपौरुषेयं प्रमाणवाक्य-

मिति प्रस्थानभेदे मधुसूदनः ४ शब्दतदुपजीवि-प्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेद-त्वम्। व्यासादिचाक्षुषजन्ये भारतादौ दृष्टार्थका-युर्वेदादौ चातिव्याप्तिवारणाय सत्यन्तमिति शब्द-चिन्तामणौ ५ शब्दातिरिक्तं शब्दोपजीविप्रमा-णातिरिक्तं च यत्प्रमाणं तज्जन्यप्रमितिविषयान-तिरिक्तार्थको यो यस्तदन्यत्वे सत्यामुष्मिकसुख-जनकोच्चारणकत्वे च सति जन्यज्ञानाजन्यो यः प्रमा-णशब्दस्तत्त्वमिति सना० धर्मोद्धारे ६ मन्त्रब्राह्म-ण(समुदायत्वम् ७) आत्मकत्वमिति ग्रं० ८ अत्र ऋगादयो वेदाः तत्प्रतिपत्त्यर्थं विचारं कुर्वन्तीति वेदाख्यामवाप्नुयुः ९ अथवा सद्भावं साधयन्तीति वेदाः १० विदन्ति वेदनहेतुभूता इति वा वेदाः ११ ब्रह्माधीनमात्मानं लभन्त इति वा वेदाः १२ ब्रह्मादीनामात्मानं लभन्त इति वा वेदाः १३ ब्रह्मणावृतस्य लाभहेतव इति वा वेदाः १४ ब्रह्म-

णात्मतयालाभहेतव इति वा वेदाः १९ विदविचारणे, विदसत्तायां, विदज्ञाने, विद्लृलाभे इति सनत्सुजातीयभाष्ये ॥ २१४० ॥

वेदान्तः—वेदानामन्तोऽवसानभागः ॥ २१४१ ॥

वैखरीवाक्—मौखिकवाय्वभिव्यङ्ग्यः सर्वश्रुतिगोचरः स्थूलः शब्दः ॥ २१४२ ॥

वैखानसः—अकृष्टपच्यौषधीभिर्ग्रामबहिष्कृताभिरग्निहोत्रादिकुर्वन् २१४३ [रावृत्तित्वं वा

वैधर्म्यम्—असाधारणो धर्मः१ तद्वृत्तित्वे सति तदित-

वैधर्म्यदोषः—एकधर्म्यसमावेशः ॥ २१४६ ॥

वैयधिकरण्यम्—भिन्नविभक्तयन्तानां पदानां विभिन्नार्थनिष्ठत्वम् ॥ २१४७ ॥ [रायां मौनम्।

वैयात्यम्—निर्लज्जत्वम् १ अप्रतिसमाधेयप्रश्नपरम्प-

वैराग्यम्—विषयेषु जिहासा १ विषयवैतृष्ण्यं वा २ दृष्टादृष्टविषयेषु स्पृहाविरोधिचित्तपरिणामविशेष इति ग्रं०३ तद्विविधं परमपरञ्चेति लक्षणतत्त्वच्छन्दे [२७-११८ पृष्ठे] द्रष्टव्यम् ॥२१९२ ॥

वैराग्यकारणम्—शरीरं व्रणवत्तद्यदन्नं च व्रणलेपनम्, व्रणशोधनवत्स्नानं वस्त्रञ्च व्रणपट्टवत् २१९३

वैशेषिकशास्त्रम्—कणादप्रणीतं विशेषपदार्थमधिकृत्य कृतो ग्रन्थः ॥ २१९४ ॥

वैश्वदेव(बलि):—अग्निपितृगोश्वकाकादिभ्यो मन्त्रविशेषेण दीयमा ( नो बलिः ) नः ॥ २१९५ ॥

वैष्णवः—वैखानसाद्यागमोक्तदीक्षायुक्त इति निर्णयसिन्धौ ॥ २१९६ ॥

व्यञ्जकत्वम्—स्वविषयेऽस्ति प्रकाशत इत्यादिव्यवहारप्रतिबन्धकमात्रापनेतृत्वम् ॥ २१९७ ॥

व्यतिरेकः—परस्परमर्थागमनम् १ *यदभावे यदभावः

व्यतिरेकवैराग्यम्—चित्तगतदोषाणां मध्ये पक्वेभ्योऽपक्वान्व्यतिरेकेणावधार्य तज्जिहासा २१६१

व्यतिरेकव्यभिचारत्वम्—कारणाभावे कार्यसत्त्वम् १ कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वमिति ग्रं.

व्यतिरेकव्याप्तित्वम्—साध्याभावव्यापकीभूताभावप्रतियोगित्वम् ॥ २१६४ ॥

व्यतिरेकसहचारः—कारणाभावे कार्याभावः २१६६
व्यधिकरणत्वम्—भिन्नविभक्त्यन्तत्वे सति भिन्नार्थनिष्ठत्वम् ॥ २१६७ ॥
व्यपदेशः—निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारः १ * एकस्मिन्नुभयारोपः, यथा देवदत्तस्यैकैव पुत्रः सैव ज्येष्ठः सैव कनिष्ठ इति ग्रं०
व्यभिचारः—साध्याभाववद्वृत्तित्वम् ॥ २१७० ॥
व्यभिचारी—साध्यवज्जातीयवृत्तित्वे सत्यन्यत्र वर्तते
व्यवधानम्—द्रव्यान्तरेण द्रव्यान्तरस्याच्छादनम्
व्यवसायत्वम्—विषयविषयकज्ञानत्वम् ॥ २१७४ ॥
व्यवस्था—विषयान्तरपरिहारेण विषयविशेषस्थापनम्
व्यवहारः—ज्ञानजनकशब्दप्रयोगः १ कार्यानुकूलशब्दप्रयोगो वा २ अर्थविशेषबोधनाय शब्दविशेषप्रयोग इति पु० ३ वादिप्रतिवादिकर्तृकः सम्भवद्भोगसाक्षिप्रमाणको विरोधकोटिव्यवस्थापनानुकूलो व्यापार इति मदनरत्ने ४ व्यवह्रियते(ज्ञायतेऽनेनेति १) हानोपादानादिकं क्रियतेऽनेनेति २१८०

**व्यष्टिः**—प्रत्येकवृक्षवदनेकबुद्धिविषयः १ व्यक्तिवद्व्यावृत्तत्वं व्यष्टित्वम् ॥ २१८२ ॥

**व्यसनम्**—इष्टानिष्टवस्तुविषयं चित्तसंलगनम् २१८३

**व्याकरणम्**—प्रत्ययविधानसामर्थ्यादर्थनिश्चयः १ अर्थविशेषमाश्रित्य स्वरप्रकृतिप्रत्ययादिविशेषादीन्विदधत्पदखण्डार्थविशेषज्ञापको ग्रन्थ इति ग्रं० २ वेदाङ्गत्वे सति शब्दसाधु(ताबोधकं)त्वाख्यापकम्

**व्याकरणप्रयोजनम्**—वैदिकपदसाधुत्वज्ञानेनोहादिकम् १ म्लेच्छा मा भूमेत्यध्येयं व्याकरणमिति महाभाष्ये ॥ २१८८ ॥

**व्याख्यानम्**—पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना, आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्

**व्याघातः**—परस्परविरुद्धधर्मयोरेकाधिकरणे समुच्चयः, यथा मम माता वन्ध्या, 'यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता, माता तु मम वन्ध्याऽऽसीदपुत्रश्च पितामहः, वा ॥ २१९० ॥

व्याजः—अन्यफलसाधनतया स्वेष्टस्यान्यफलसाधनत्वेन ज्ञापितस्याचरणम् ॥ २१९१ ॥

व्यापकत्वम्—सर्वसंबद्धत्वम् १ देशाद्यन्तरहितत्वं वा २ सजातीयादिभेदरहितत्वं वेति वे० ३ हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् ४ स्वाधिकरणवृत्त्यभावाप्रतियोगित्वं वेति न्या० ॥२१९६॥

व्यापारः—करणजन्यकरणजन्यक्रियाजनकः १ तज्जन्यत्वे सति तज्जन्यजनकत्वम्, यथा कुठारदारुसंयोगः। ईश्वरेच्छादिवारणाय तज्जन्यत्वे सतीति, दण्डरूपादिवारणाय तज्जन्यजनकत्वमिति ग्रं०।

व्याप्तिः—साध्याभाववदवृत्तित्वमिति पूर्वपक्षे १ साध्यसाधनयो(र्नियतसामानाधिकरण्यम् २)रव्यभिचरितसम्बन्धः ३ साधनसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यमिति ग्रं०।

---

१ कारकेण जन्यत्वे सति तत्कारकजन्यक्रियां प्रति जनक इत्यर्थः।

व्याप्यत्वम्—न्यूनदेशवृत्तित्वम् १* अव्याप्याभाववदवृत्तित्वम् २* साध्यवदन्यावृत्तित्वे सति व्याप्त्याश्रयत्वमिति पुस्तकान्तरे ॥ २२०६ ॥

व्याप्यवृत्तित्वम्—स्वसमानाधिकरणात्यन्ताभाव(अ) प्रतियोगि(त्वम् १)तानवच्छेदकधर्मवत्त्वम् २२०७

व्यावर्तकत्वम्—लक्ष्यवृत्तित्वे सतीतरभेदव्याप्यत्वम्।

व्यावहारिकत्वम्—आगन्तुकदोषासहकृताविद्याकार्यत्वम् ॥ २२०९ ॥

व्यावहारिकसत्त्वम् } आत्मज्ञानपूर्वाबाध्यत्वम् १ सं-
अज्ञातसत्ताकत्वम् } सारदशायामबाधितत्वं वा ।

व्यासज्यवृत्तित्वम्—एक(त्वानवच्छिन्नपर्याप्तिकत्वम् १) मात्रवृत्तिधर्मावच्छिन्नपर्याप्तिमत्त्वम् २२१३

व्युत्पत्तिः—शब्दानामर्थावबोधकशक्तिः १ समुदायशब्दस्यावयवशोऽर्थबोधकताशक्तिर्वा ॥२२१५॥

व्रतम्—नियमाभिधानम् १ सम्यक्सङ्कल्पजनितानुष्ठेयक्रियाविशेषरूपमिति हेमाद्रिव्रतखण्डे २२१७

## श

**शक्तिः**—कार्यजननानुकूलं कारणनिष्ठं सामर्थ्यमिति वेदान्तिमते १ अस्मात्पदादयमर्थो बोद्धव्य इ(त्य-नादिसङ्केतः २)तीश्वरेच्छेति न्या० ३ सा चतुर्विधा योगो रूढिर्योगरूढिर्यौगिकरूढिश्चेति लक्षणतत्त्वच्छन्दे[१६७-१६९-१७० पृष्ठे] द्र०॥२२२०॥

**शक्तिवृत्तिः—** } **मुख्यावृत्तिः** } पदानामन्वयानुभवजननसामर्थ्यम् १ पदपदार्थयोर्वाच्यवाचकभावसम्बन्धो-मुख्या वा। लक्षणावारणाय मुख्येति २२२२

**शक्तिग्रः**—व्याकरणोपमानकोशाप्तवाक्याद्व्यवहार-तश्च, वाक्यस्य शेषाद्विवृत्तेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥ २२२३ ॥

**शक्यत्वम्**—पदनिष्ठशक्तिविषयत्वम् ॥ २२२४ ॥

**शठः**—कामिनीविषयकपटपटुः ॥ २२२५ ॥

**शब्दः**—श्रोत्रग्राह्यो गुणः। रूपादावतिव्याप्तिवार-णाय श्रोत्रेति, शब्दत्वेऽतिव्याप्तिवारणाय गुण

इति १* आकाशविशेषगुण इति नैयायिकप्राभाकरयोर्मते २ वर्णात्मकत्वे सतीन्द्रियसम्बन्धाज्ज्ञानहेतुः ३ वर्णतादात्म्येनार्थबोधजनकत्वम् २२२९

**शब्दतात्पर्यम्**—तदितरप्रतीतिमात्रेच्छयाऽनुच्चरितत्वे सति तदर्थप्रतीतिजननयोग्यत्वम्, यथा भोजनप्रकरणे 'सैन्धवमानये'तिवाक्यस्थं सैन्धवपदं लवणेतराश्वादिप्रत्यायनेच्छयाऽनुच्चरितत्वे सति लवणरूपार्थविषयकप्रतीतिजननयोग्यमिति । भोजनप्रकरणे सैन्धवमानयेत्युक्ते लवणानयनप्रतीतिवदश्वानयनप्रतीतिरपि स्यात्तद्योग्यत्वस्य विद्यमानत्वात्तद्वारणाय पूर्वदलम्, तथाप्युभयेच्छया सैन्धवमानयेत्युक्ते वाक्येऽव्याप्तिवारणाय मात्रेति, उभयेच्छयायुक्तत्वेपि तदितरप्रतीतिमात्रेच्छयानुच्चरितत्वस्य सत्त्वान्नाव्याप्तिः॥ २२३०॥

**शब्दप्रमाणम्**—शाब्दप्रमाकरणमिति वे० १ यथार्थवाक्यम् २ आप्तोच्चरितत्वे सति वाक्यत्वं शब्दत्वम्। वाक्यमात्रोक्तावानाप्तोच्चरितवाक्येऽतिव्याप्तिर-

त आप्तोच्चरितत्वनिवेशः, तावन्मात्रोक्तौ जबगड-
दशादावतिव्याप्तिरतो वाक्यत्वमिति ग्रं० ३ स्वस-
मानविषयवाक्यार्थयथार्थज्ञानज(न्यत्व)नकत्वमिति
चिन्तामणौ ४ तात्पर्यविषयाबाधितसंसर्गगोचर-
शाब्दज्ञानजनकत्वमिति पुं० ५ असन्निकृष्टार्थप्र-
तिपादकं वचनम्। अनुवादविसंवादव्यवच्छेदाया-
सन्निकृष्टपदम्, अपेक्षितादिपदनिराकरणायार्थग्र-
हणम्, अनुमानत्वनिराकरणाय वचनग्रहणमिति
मीमांसकाः ६ शब्दविज्ञानादसन्निकृष्टेऽर्थेविज्ञानम्।
प्रत्यक्षव्यवच्छेदार्थमसन्निकृष्टेति, आकाशं भक्ष-
येत्यादिव्यवच्छेदायार्थेतीति शाबरभाष्ये ७ सम-
यबलेन सम्यक्परोक्षानुभवसाधनम्। अनुमानादि-
व्यावृत्त्यर्थं समयग्रहणम्, प्रत्यक्षव्यावृत्त्यै परोक्ष-
ग्रहणम्, संशयादिव्यावृत्त्यै सम्यग्ग्रहणम्, स्मृति-
व्यावृत्त्यर्थमनुभवग्रहणमिति भूषणकारः २२३८

शमः--नित्यनैमित्तिककर्मातिरिक्तानां व्यापाराणाम-
न्तरिन्द्रियनिग्रह इति गूढार्थतत्त्वालोके धर्मदत्तः १

ब्रह्मज्ञानोपयोगिव्यापारातिरिक्तचित्तव्यापारमात्र-
निरोध इति शङ्करदिग्विजयसारे ॥ २२४० ॥

**शरीरम्, क्षेत्रम्**- निरपेक्षत्वगिन्द्रियाधारः। अङ्गुल्याद्यव-
यवानां प्रत्येकं शरीरत्वनिरासाय निर-
पेक्षपदमिति देहात्मवादिमते १ अन्त्यावयविमा-
त्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं शरीरत्वम्। हस्तत्व-
पृथिवीत्वद्रव्यत्वसत्त्वादिवारणाय प्रथमवृत्त्यन्तम्,
घटत्वादिवारणाय चेष्टावद्वृत्तीति, घटशरीरसंयोगा-
दिवारणाय जातीति न्या० २ सुखदुःखान्यतर-
साक्षात्काररूपभोगायतनमिति वे० ३ शीर्यते
प्रतिक्षणं नश्यतीति। तच्च स्थूलसूक्ष्मकारणभेदात्त्रि-
विधम्। योनिजायोनिजभेदाद्द्विविधमिति तार्कि-
कमते ल०त०श०[३४-१६८-२२२ पृष्ठे] द्र०।

**शरीरित्वम्**—भोगावच्छेदकत्वम् ॥ २२४४ ॥

**शाब्दबोधः**—एकपदार्थेऽपरपदार्थसंसर्गविषयकं ज्ञानम्

**शाब्दीप्रमा**—वाक्यकरणिका प्रमा १ सा द्विविधा लौ-
किकी वैदिकी चेति ल०त०श०[१७४ पृष्ठे] द्र०

**शाब्दीभावना**–पुरुषप्रवृत्त्यनुकू(लभक्र्व्यापारः) लो भावयितुर्व्यापारविशेषः ॥ २२४८ ॥

**शारीरक**मीमांसा शास्त्रम्– } वेदान्तानां ब्रह्मणि तात्पर्यनि(रूपकम् १)र्णायिका२ शास्यते प्रति पाद्यते तत्त्वं शिष्येभ्योऽनेनेति। शारीरको जीवः तमधिकृत्य कृतो ग्रन्थः **शारीरकः** ॥ २२५१ ॥

**शास्त्रत्वम्**–हितशासकत्वमिदं सामान्यलक्षणम् १ एकप्रयोजनोपनिबद्धत्वे सत्यशेषार्थप्रतिपादकत्वमिति मा०का०भाष्यटीकायां आनन्दगिरिः२ प्रवृत्तिश्च निवृत्तिश्च पुंसां येनोपदिश्यते, तद्धर्माश्चोपदिश्यन्ते शास्त्रं शास्त्रविदो विदुः४ तच्च न्यायवैशेषिकसाङ्ख्ययोगमीमांसावेदान्तभेदेन षड्विधमिति ल० त०श०[११४-१६१-१९४-२१७ पृष्ठे] द्र०

**शास्त्रवासना**–शास्त्रानुभवजनितत्वे सति शास्त्रस्यैव पुनः पुनः ( वादिजयाद्यर्थम् ) स्मरणहेतुः २ सा पाठव्यसनबहुशास्त्रव्यसनानुष्ठानव्यसनभेदेन त्रिविधा ल० त० श० [१२३ पृष्ठे] द्र०। क्लेश-

बहुत्वात्पुरुषार्थानुपयोगित्वाद्दर्पहेतुत्वाद्दुःसम्पादत्वा-
ज्जन्महेतुत्वाच्च समस्तशास्त्रवासना मलिना २२५८

शास्त्रीयगुणाधानदेहवासना—गङ्गास्नानशालिग्रा-
मतीर्थादिसम्पादनम् ॥ २२६१ ॥

शास्त्रीयदोषापनयनदेहवासना—स्नानाचमनादि-
भिराशौचाद्यपनयनम् ॥ २२६२ ॥

शास्त्रीयबाधः—"अथात आदेशोनेतिनेति" इत्यादि-
श्रुत्या ब्रह्मव्यतिरेकेण प्रपञ्चाभावनिश्चयः २२६३

शिक्षा—ह्रस्वदीर्घादि वैदिकस्वरोच्चारणप्रतिपादकं शा-
स्त्रम् २ शिक्ष्यते स्थानादिकमनया ॥२२६६॥

शिक्षाप्रयोजनम्—उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लु-
तादिविशिष्टस्वरव्यञ्जनात्मकवर्णोच्चारणविशेषज्ञानम्

शिष्टत्वम्—अनुशासन (विषयत्वम्) योग्यत्वम् १ *
वेदोक्ताबाधितप्रामाण्यार्थाभ्युपगन्तृत्वे सति वेदवि-
हिताऽकरणप्रत्यवायफलककर्मकारित्वम् । चैत्यव-
न्दनप्रवृत्तबौद्धे व्यभिचारवारणाय वेदविहितेति ।

शिष्टाचारः—शिष्टैर्धर्मबुद्ध्यानुष्ठीयमाना(चारः १ ) लौकिकव्यवहारः ॥ २२७१ ॥

शिष्यम्—शिक्षणीयम् १ उपदेशविषयो वा २२७३

शुद्धिः—वैदिककर्मयोग्यतासम्पादकसंस्कारः २२७५

शुभ / शुद्ध वासना— विहितविहितसमविद्याकर्मतत्संस्कार-तत्फलसंस्काररूपा । विहिता विद्या देवतोपासनादिरूपा, विहितसमा आकस्मिकदेवतामूर्तिदर्शनादिरूपा, विहितं कर्म संध्यावन्दनादि, विहितसमं पिपीलिकादिभ्यो बुद्ध्या विपिने गत्वाऽन्नदानादि, एतेषां चतुर्णां संस्कारास्तथैतेषां ततोऽपि पूर्वजन्मकृतानां यानि जन्मान्तरे फलानि देवलोकाद्याप्तिरूपाणि तेषां च संस्कारा इति शुभवासनोदाहरणानि १ अविनाश्यैश्वर्यप्रदत्वे सति साधुसेवितं वा । निमेषोन्मेषादावतिव्याप्ति-वारणायाविनाशीति जी० वि० टी० ॥२२७७॥

शुभेच्छाज्ञानभूमिः—नित्यानित्यवस्तुविवेकादिपुरः-सरा फलपर्यवसायिनी मोक्षेच्छा ॥ २२७८ ॥

शृङ्गारः–रतिक्रीडाद्यर्थस्त्रीपुंसयोरन्योन्यं प्रतीच्छा।
शेषत्वम्–उपकारित्वम् १ परोद्देश्यप्रवृत्तिकत्वं वा।
शैवः–पाशुपताद्यागमोक्तदीक्षायुक्तः ॥ २२८२ ॥
शोकः–इष्टवियोगानुचिन्तनम् ॥ २२८३ ॥
शोधनत्वम्–दोषनिवारणत्वम् ॥ २२८४ ॥
शौचम्–करचरणादिप्रक्षालनम् १ शरीरमनसोः शुद्धिर्वा २ अहं ममेति विण्मूत्रलेपगन्धादिमोचनम्, शुद्धशौचमिति प्रोक्तं मृज्जलाभ्यां तु लौकिकम्
श्यामा–शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला, तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्त्तिता।
श्रद्धा—गुरूक्तवेदान्तवाक्यार्थावश्यंभावित्वनिश्चयः १ शास्त्राचार्योपदिष्टेर्थेऽननुभूतेऽप्येवमेवैतदिति विश्वासो वा ॥ २२८९ ॥
श्रवणम्–उपक्रमादिभिः षड्भिर्लिङ्गैर्वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणम् १ समन्वयाध्यायोक्ततात्पर्य निश्चायकोपक्रमादियुक्त्यनुसन्धानमि-

---

१ लीनस्यार्थस्य ( तात्पर्यादेः ) गमकम्।

त्यद्वैतसिद्धौ २ श्रुतिवाक्यानां कुत्र तात्पर्यमिति जिज्ञासायां तन्निर्णयानुकूलो व्यापार इति ग्रं० ।

**श्राद्धम्**—अदनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्याग इति या० मिताक्षरायाम् ।

**श्रीगुरुत्वम्**—मोक्षलक्ष्मीलक्षणलक्षितत्वम् २२९४

**श्रुतार्थापत्तिः**—अनुपपद्यमानार्थश्रवणात्तदुपपादकीभूतार्थान्तरकल्पनम् । सा द्विविधा-अभिधानानुपपत्तिरभिहितानुपपत्तिश्चेति ल०[३२-३३ पृष्ठे] इ०

**श्रुतिः**—स्वार्थं वक्तुं पदान्तरानपेक्षं पदम् १* क्रमप्रवचनम् २ निरपेक्षो रवो वा । रव इत्युक्ते वाक्यादावतिप्रसङ्गस्तद्वारणाय निरपेक्ष इत्युक्तमिति मीमांसकाः ३ श्रूयते इति । श्रुति स्मृतिविरोधे तु स्मृतेस्त्यागो विधीयते, तथैव लौकिकं वाक्यं स्मृतिबाधे परित्यजेत् ॥ २२९९ ॥

**श्रोत्रम्**—शब्द(ज्ञानजनकमि० १) उपलब्धिसाधनमिन्द्रियम् ॥ २३०१ ॥

---

१ इतर ( = प्रत्यक्षादि ) प्रमाणम् ।

श्रोत्रियत्वम्—वेदवेदाङ्गपारगत्वम् १ वेदान्तार्थपारगत्वं वा

श्लाघा—निजगुणाविष्करणम्।

श्लोकः—चतुष्पादात्मकः १ छन्दोविशिष्टवाक्यरचनं वा २ श्लोक्यते शस्यतेऽनेनेति ॥ २३०६ ॥

## स

सङ्करः—
साङ्कर्यम् } परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेक(अधिकरणवृत्तित्वम् १) त्र समावेशः, यथा भूतत्वमूर्त्तत्वयोः ॥ २३११ ॥

सङ्केतः—अर्थबोध (न) नाशक्तिविशेषः २ स्वाभिप्रायव्यञ्जकचेष्टाविशेष इति नर्तकाः ॥२३१४॥

सङ्कोचः—बहुविषयकवाक्यस्याल्पविषयकतया व्यवस्थापनम् ॥ २३१५ ॥

संक्रान्तिः—राश्यन्तरसंयोगानुकूलव्यापारः २३१६

सङ्क्षेपः—भूयसोर्थस्याल्पवाक्यादिना प्रकाशनम्।

सखण्डोपाधिः—बहुपदार्थघटितो धर्मः ॥२३१८॥

सङ्ख्या—एकं द्वे त्रीणीत्यादिप्रत्यक्षविषयो गुणः १ गणनव्यवहारासाधारणं कारणम् २ एकत्वादिव्य-

वहारासाधारणकारणत्वम् । घटादिवारणायैकत्वा-
दीति, कालादिवारणायासाधारणेति ॥२३२१॥
सङ्गतिः—पदपदार्थयोः स्मार्यस्मारकभावसम्बन्धः १
* अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानवि-
षयत्वम् २ सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा,
निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते २३२३
सङ्ग्रहः—बह्वर्थकवाक्यानामेकत्र सङ्कलनम् १
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः, निबन्धो
यः समासेन संग्रहं तं विदुर्बुधाः ॥ २३२९ ॥
सङ्घातः—समानधर्मवतां परस्परसम्बन्धः १ दृढसं-
योगः समूहो वा ॥ २३२७ ॥
सजातीयभेदः—समानजातिकृतो भेदः, यथा वृक्षस्य
वृक्षान्तरात् ॥ २३२८ ॥ [न्मीनं कर्म ।
सञ्चितकर्म—जन्मान्तरहेतुभूतं सदवस्थितं पूर्वज-
सञ्ज्ञा—नाममात्रबोधिका ॥ २३३० ॥
सत्कारः—साधुरयं तपस्वी ब्राह्मण इत्येवमविवेकिभिः
क्रियमाणा स्तुतिः ॥ २३३१ ॥

**सत्यम्**–स्वीकारः १ * अनर्थानुबन्धियथाभूतार्थवचनम् २ प्रियहितप्रमाणदृष्टश्रुतार्थभाषणं वा ३ * विधिमुखप्रतीतिविषय इति वे० ४ यथार्थज्ञानविषय इति नै० ॥ २३३६ ॥

**सत्ता**–आत्मधारणानुकूलव्यापारः ॥ २३३७ ॥

**सत्त्वत्वम्**–लघुत्वे सति ज्ञानसुखहेतुत्वम्॥ २३३८॥

**सत्त्वापत्तिः**-निर्विकल्पकब्रह्मात्मैक्यसाक्षात्कारः,स्वप्नवज्जगतो मिथ्यात्वेन स्फुरणात्स्वप्न इति चोच्यते।

**सदसद्विलक्षणत्वम्**–स्वरूपवत्त्वे प्रतीयमानत्वे वा सति बाधयोग्यत्वम् ॥ २३४१ ॥

**सदाचारः**–वेदादिशास्त्रानुसारी आचारः २३४२

**सदुत्तरम्**–पृष्टस्य सम्यगुत्तरम् १ प्रतिज्ञापत्रानुसारिण्युत्तरं वा २३४४ [त्साकारूपा चित्तवृत्तिः

**सन्तोषः**- विद्यमानभोगोपकरणादधिकस्यानुपादि·

**सन्देशः**–वाचिकार्थकथनम् ॥ २३४६ ॥

**सन्देहः**–एकस्मिन्धर्मिणि विरुद्धकोटिद्वयज्ञानम्, यथा पर्वतो वह्निमान्न वा ॥ २३४७ ॥

**सन्दंशनम्**—एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वम्, यथाभिक्रमणम् २३४८

**सन्धिः**—अन्योन्यं सन्धानम् १* अर्द्धमात्रोच्चारणकालेनाव्यवहितयोर्वर्णयोर्द्रुततरोच्चारणम् २३५०

**सन्ध्या**—रात्रेराद्यन्तदण्डचतुष्टयात्मककालः २३५१

**सन्निधिः**—पदानामविलम्बोच्चारणम् ॥ २३५२ ॥

**सन्निपत्योपकारकम्**—कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म ॥ २३५३ ॥

**सन्निहितत्वम्**—स्वरूपभिन्नत्वे सति संवन्धित्वम्।

**समत्वम्**—सर्वत्र ब्रह्मदर्शित्वम् ॥ २३५७ ॥

**समनियतत्वम्**—व्यापकत्वे सति व्याप्यत्वम् १ तद्व्याप्यत्वे सति तद्व्यापकत्वं वा ॥ २३५९ ॥

**समन्वयत्वम्**—वेदान्तानां ब्रह्मप्रमितिजनकत्वमिति तत्त्वदीपने १ ब्रह्मात्मैकत्वप्रतिपादकत्वेन वेदान्तवाक्यानां समनुगतत्वमित्यद्वैतकौ०॥२३६१॥

**समवायसम्बन्धः**—अयुतसिद्धयोः सम्बन्ध इति श्रीधराचार्याः १ नित्यत्वे सति सम्बन्धत्वम्।

आकाशादिवारणाय संबन्धत्वमिति, संयोगवारणाय नित्यत्वे सतीति २ संयोगभिन्नत्वे सति साक्षात्संबन्धत्वमिति केचित् ॥ २३६४ ॥

**समवायिकारणत्वम्**—समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वम् ।

**समष्टित्वम्**—वनवदेकबुद्धिविषयत्वम् १ गोत्वादिवत्सर्वत्रव्यष्टिष्वनुस्यूतत्वमिति ग्रं०॥ २३६७ ॥

**समसमुच्चयः**—ज्ञानकर्मणोः परस्परैकस्मिन्कालेऽनुष्ठानम् ॥ २३६८ ॥

**समाधानम्**—विवादभञ्जनम् १ सिद्धान्तानुकूलतर्कादिना सम्यगर्थावधारणं वा २ *निद्रालस्यप्रमादत्यागेन स्थितिः ३* श्रवणाद्यपेक्षितचित्तैकाग्र्यमिति वेदान्तग्रन्थे ॥ २३७२ ॥

**समाधिः**—व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावे

---

१ समवायसम्बन्धेन घटाधिकरणे कपालादौ कपालादेस्तादात्म्यसम्बन्धेनैव सत्त्वात् समवायेन घटं प्रति तादात्म्येन कपालं कारणमित्यर्थः ।

सति चित्तस्यैकाग्रता परिणाम इति यो० १ द्रष्टृस्व-
रूपावस्थानहेतुश्चित्तवृत्तिनिरोध इति वे० २ अधिकं
योगशब्दे द्र० । स द्विविधः सविकल्पो निर्विकल्प-
श्चेति ल०त०श०[११२-२१६ पृष्ठे]द्र०।२३७४।

**समानप्राणः**—नाभिस्थानवर्त्तित्वे सत्यशितपीतान्नपा-
नादेः समीकरणकरः २३७९ [ तत्वम्

**समानपदत्वम्**—निमित्ताविकरणनिमित्तिमत्पदाघटि-

**समानाधिकरणत्वम्**—एकाधिकरणवृत्तित्वम् १* वि-
भिन्नविभक्तिराहित्ये सत्यभेदेनैकार्थबोधजनकत्वम्

**समाप्तः**—सम्यक्प्राप्तः १ अवसानप्राप्तो वा २* चर-
मवर्णध्वंसवत्वं समाप्तत्वम् ३ आरब्धकर्मणः स-
म्पूर्णत्वमिति ग्रं० २३८२ [ पनम्

**समावेशः**—बहूनामर्थानामेकत्र वाक्यादौ व्यवस्था-

**समासः**—द्व्यादिपदानामेकपदतासम्पादकः १ व्यस्त-
पदयोर्व्यस्तपदानां वैकत्र समसनमिति चन्द्रकीर्त्तिः
२ अभिधानाश्रितलोपाभाववदन्यमध्यवर्त्तिविभ-
क्तिशून्यनामसमुदायत्वमिति पु० ॥ २३८६ ॥

**समासप्रयोजनम्**—ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वम्

**समुच्चयः**—परस्परनिरपेक्षाणामनेकेषामेकस्मिन्नन्वयः १ कर्मद्वयस्यैकक्रियानिष्ठत्वमिति पु० २ स द्विविधः समसमुच्चयः क्रमसमुच्चयश्चेति ल० [२१३ पृष्ठे]द्र०

**समूहत्वम्**—अपेक्षाबुद्धिविषयविषयत्वम् ॥२३९०॥

**समूहालम्बनम्**-नानाप्रकारतानिरूपितनाना(मुख्य-विशेष्यताशालिज्ञानम्)विशेष्यताशालिनिज्ञानम्

**सम्प्रदानत्वम्**—दानकर्मोद्देश्यत्वम् ॥ २३९३ ॥

**सम्प्रदायः**—शिष्टपरम्परावतीर्णोपदेश इति भरतः १ गुरुपरम्परागतसदुपदिष्टव्यक्तिसमूह इत्यपरे ।

**सम्बद्धत्वम्**—परस्परमन्वितत्वम् ॥ २३९६ ॥

**सम्बन्धः**—सम्यग्बन्धनमिति काव्यज्ञाः १ संसृष्ट-बुद्धिव्यवहारयोर्हेतुः २ * संबन्धिभिन्नत्वे सति संबन्ध्याश्रितत्वे सत्येकत्वम् ३ संबन्धिभिन्नत्वे सति विशिष्ट(बुद्धिनिया०)प्रतीतिनियामकत्वमिति ग्रं०४स साक्षात्परम्पराभेदेन द्विविधः ल०त०श० [११८-२१६ पृष्ठे] द्र० ॥ २४०० ॥

**सम्बोधनम्**—अन्यत्रासक्तस्याभिमुखीकरणम् ।

**सम्भवप्रमाणम्**—भूयःसहचारदर्शनजन्यज्ञानम्, यथा सम्भवति ब्राह्मणे विद्या, सम्भवति सहस्रे शतमित्यादौ १ अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणमिति पु० ॥ २४०३ ॥

**सम्भावना**—शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः १ *निश्चयप्रायऔत्कट्यापन्नसंशयः २ उत्कटैकतरकोटिकसंशयो वेति शितिकण्ठ्याम् ॥ २४०६ ॥

**सम्यग्ज्ञातत्वम्**—पदवाक्यमानादिविशिष्टज्ञानविषयि·(य)ताशालित्वम् ॥ २४०७ ॥

**सर्वज्ञत्वम्**—स्वरूपचैतन्येन स्वाध्यस्तसर्वजगदवभासकत्वमिति वे० मुक्तावल्याम् १ सर्वं जानातीति ज्ञः

**सविकल्पकम्**—वैशिष्ट्यावगाहिज्ञानम्, यथा घटमहं जानामीत्यादिज्ञानम् । वैशिष्ट्यावगाहित्वमिच्छादावपीत्यत उक्तं ज्ञानमिति, ज्ञानत्वञ्च निर्विकल्पकेपीति वैशिष्ट्यावगाहीत्युक्तमिति धर्मराजेन

सविकल्प<br>सबीज -<br>सम्प्रज्ञात } **समाधिः**— ज्ञातृज्ञानज्ञेयविकल्पावभासपुरःसरमात्मनि चित्तसमाधानम्। अङ्गिसमाधिव्यावृत्त्यर्थं प्रथमदलम्॥२४११॥

**सहकारित्वम्**—स्वभिन्नत्वे सति स्वकार्यकारकत्वम्।

**सहचारः**—तदधिकरणवृत्तित्वम् ॥ २४१३ ॥

**सहसापतनतापः**—पुण्यकर्मक्षये मुद्गरादिप्रहरणजन्यस्तापः २४१४ [ कालेऽनवस्थितिः

**सहानवस्थानविरोधः**—एकाधिकरणे एकस्मिन्(देश)

**सहाप्रतीतिविरोधः**—एकाधिकरणे एकस्मिन् (देश) कालेऽप्रतीतिः ॥ २४१६ ॥

**साक्षात्संबन्धत्वम्**—यन्निष्ठसंसर्गतायां प्रतियोग्यनुयोगिविषयतानिरूपितत्वमिति हरिनाथभट्टाचार्यः।

**साक्षात्साधनत्वम्**—अव्यवहितपूर्वत्वसंबन्धेन कार्याधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वमिति माथुर्याम्

**साक्षित्वम्**—अकर्तृत्वे सति द्रष्टृत्वम् १ * उदासीनत्वे

सति बोद्धृत्वम् २ जीवेश्वरानुगतसर्वानुसन्धातृचैत-
न्यत्वमिति मतान्तरे ॥ २४२२ ॥

साङ्ख्यशास्त्रम्-सम्यग्विविच्य ख्यायन्ते प्रकटीक्रि-
यन्ते तत्त्वानि प्रकृतिपुरुषपदार्थरूपाणि यस्मिंस्तत्

सादृश्यम्—तद्भिन्नत्वे तदसाधारणधर्मशून्यत्वे वा
सति तद्गतभूयोधर्मवत्त्वम् ॥ २४२९ ॥

साधकत्वम्—स्वपक्षप्रमितिजनकत्वम् ॥ २४२६ ॥

साधनत्वम्—व्याप्त्याधारत्वम् १ * करणकारकत्वम्
२ * कार्यजनकत्वम् ३ * ज्ञानप्राप्त्युपायत्वम् ४
ब्रह्मविद्याहेतुत्वं वा ५ तच्च साक्षात्परम्पराभेदेन
द्विविधं ल०त० [११८-२१६ पृष्ठे] द्र० २४३१

साधारणम्—अनेकस्वत्ववत्येकस्मिन् ॥ २४३२ ॥

साधारणकारणत्वम्—कार्यत्वावच्छिन्नकार्यतानिरू-
पितकारणताशालित्वम् ॥ २४३३ ॥

साधुत्वम्- निर्दोषत्वम् १ * अपभ्रंशभिन्नत्वम् २ *
अभ्युदयसाधनप्रयोगविषयत्वम् ३ स्वपरकार्यं सा

(ध्वो) ध्यतीति ४ निर्वैरः सदयः शान्तो दम्भाह-
ङ्कारवर्जितः, निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते
**साध्यत्वम्**—व्याप्तिनिरूपकत्वम् ॥ २४४० ॥
**साम**—प्रियवचनैः क्रोधोपशमनम् १ * गीति-
(विशिष्ट ८८०१४ मन्त्रः) रूपमन्त्रः २४४२
**सामग्री**—कारणस (मुदायः) मूहः ॥ २४४३ ॥
**सामयिकाभावत्वम्**—उत्पत्तिविनाशवत्त्वे सत्यभाव-
**सामर्थ्यम्**—कार्यजननयोग्यत्वम् । [ त्वम्
**सामवेदः**—सामबहुलो वेदः १ सामावयवको वेदो
वा २ सामविनियोजको वेदो वा ३ सामद्रव्यको
वेदो वेति न्यायसुधायाम् ॥ २४४९ ॥
**सामानाधिकरण्यम्**—समानाधिकरणवृत्तित्वम् १ *
एकविभक्त्यन्तत्वे सति एकार्थनिष्ठत्वम् ॥२४५१॥
**सामानाधिकरण्यसम्बन्धः**—भिन्नप्रवृत्तिनिमित्तानां
शब्दानामेकस्मिन्नर्थे वृत्तिः, यथा सोऽयं देवदत्तः ।
घटकलशयोर्वारणायोक्तं भिन्नेति १ भिन्नप्रवृत्ति-
निमित्त (कत्वे सत्येकार्थप्रतिपादकत्वमिति **स्वारा-**

ज्यसिद्धौ २ ) योः समानविभक्त्यन्तयोः पद-
योरेकस्मिन्नर्थे तात्पर्यम्। मृद्घटः नीलमुत्पलं राज्ञः
पुरुष इत्यादिवाक्येषु व्यभिचारनिरासाय क्रमेण
विशेषणम्, कुंभाकाशः शरावावच्छिन्नाकाशाद्भि-
द्यत इति वाक्ये व्यभिचारनिरासाय सामाना-
धिकरण्यपदमिति सदानन्दीयशङ्करदिग्विजये ३
तद्द्विविधं मुख्यसामानाधिकरण्यं बाधसामानाधिक-
रण्यञ्चेति ल० त०[१४४-१६१ पृष्ठे]द्र०२४५४

**सामान्यम्**—बहुव्यापकम् १ अनुगतधर्मो वा २ *
नित्यमेकमनेकसमवेतम् ॥ २४५७ ॥

**सामान्यतोदृष्टानुमानम्**—कार्यकारणभिन्नलिङ्गकम-
नुमानम् १ पूर्वागृहीतव्यक्तिसामान्यविषयमनुमा-
नमिति यो० ॥ २४५९ ॥

**सामान्यलक्षणसन्निकर्षः**—इन्द्रियसंबन्धविशेष्यक-
ज्ञानप्रकारीभूतं सामान्यम् ॥ २४६० ॥

**सामान्याहङ्कारः**—सामान्यतोऽहमित्यभिमाना-
त्मिका चित्तवृत्तिः ॥ २४६१ ॥

**सारथिः**—रथादिघोटकनियोगकर्त्ता ॥ २४६२ ॥

**सावयवत्वम्**—अवयवजन्यत्वम् ॥ २४६३ ॥

**सिद्धत्वम्**—निष्पन्नत्वम् १ निष्पत्तिःसिद्धिः २४६९

**सिद्धान्तः**—प्रामाणिकत्वेनाभ्युपगतोऽर्थः १ प्रमाणाद्युपन्यासेन पूर्वपक्षनिरासक इति ग्रं० २ स च सर्वतन्त्रप्रतितन्त्र [१२८ पृष्ठे] अधिकरणाभ्युपगमभेदेन चतुर्विधः ॥ २४६७ ॥

**सिद्धासनम्**—सिद्धये सर्वभूतादिविश्वाधिष्ठानमद्वयम्, यस्मिन्सिद्धिङ्गताः सिद्धास्तत्सिद्धासनमुच्यते

**सुखम्**—सर्वेषामनुकूलतया वेदनीयम् । शत्रुदुःखवारणाय **सर्वेषा**मिति १ अन्येच्छानधीनेच्छाविषयत्वे सति भावत्वं सुखत्वम् । भोजनादावतिव्याप्तिवारणायान्येच्छाऽनधीनेतीच्छाविशेषणमिति ग्रं० २ सत्त्वपरिणामरूपप्रीत्यात्मकचित्तवृत्तिविशेष इति वेदान्तग्रन्थे ३ इष्टसाधनताज्ञानाजन्यजन्येच्छाविषयगुण इति न्या० ॥२४७२ ॥

सुविचारणाभूमिः— } गुरुमुपसृत्य वेदान्तवाक्यविचा-
विचारणाज्ञानभूमिः } रात्मकश्रवणमननात्मिका वृत्तिः

सुषुप्तिजाग्रत्—सुषुप्त्यवस्थायां सात्त्विकी या सुखा-
कारा वृत्तिः ( यदनन्तरं प्रबुद्धस्य सुखमहमस्वा-
प्समिति परामर्शः ) सा ॥ २४७५ ॥

सुषुप्तिसुषुप्तिः—सुषुप्त्यवस्थायां या तामसी वृत्तिः
(यदनन्तरं गाढं मूढोऽहमस्वाप्समिति परामर्शः)सा

सुषुप्तिस्वप्नः—सुषुप्त्यवस्थायां या राजसी वृत्तिः
( यदनन्तरं दुःखमहमस्वाप्समिति प्रबुद्धस्य परा-
मर्शः ) सा ॥ २४७७ ॥

सुषुप्त्यवस्था } जाग्रत्स्वप्नोभयभोगप्रदकर्मोपरमे सति
सम्प्रसादाव. } द्विविधदेहाभिमाननिवृत्तिद्वारा विशे-
षविज्ञानोपरमात्मिकाया बुद्धेः कारणात्मनाव-
स्थितिः । मूर्च्छाप्रलयादिवारणाय विशेष्यदलम् १
सुखगोचराविद्यागोचराऽविद्यावृत्त्यवस्था २४७९

सुहृद्—प्रत्युपकारमनपेक्ष्योपकारी ॥ २४८० ॥

सूक्ष्म लिङ्ग **शरीरम्**—अपञ्चीकृतपञ्चभूतकार्यम् १ दृगगोचरत्वे सति कारणदेहभिन्नत्वम् ॥ २४८२ ॥

**सूत्रत्वम्**—अल्पाक्षरत्वे सति बह्वर्थसूचकत्वम् १ अल्पाक्षरमसन्दिग्धं न्याय (सार) वद्विश्वतोमुखम्, अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुरिति पारा०

**सेवकव्यसनम्**—परराष्ट्राभिभवादीच्छया सेवकवृद्ध्यर्थेच्छाहेतुर्व्यसनम् ॥ २४८६ ॥

**सेवा**—सर्वभावेनाचार्यानुकूलकारित्वम् ॥ २४८८ ॥

**सोपाधिकभेदत्वम्**—उपाधिसत्ताव्याप्यसत्ताकत्वम्।

**सोपाधि** काध्यासः / कभ्रमः— } उपाधिनिरूपणाधीननिरूपणम् ॥ २४८९ ॥

**संन्यासः**-विहितानां कर्मणां विधिना(न्यासः)परित्यागः।अविहितनिषिद्धत्यागिनां वारणाय विहितानामिति,आलस्यादिना विहितत्यागिनां वारणाय विधिनेत्युक्तमित्यद्वैतकौ० १ ग्रन्थान्तरे तु विधितो गृहीतानां नित्यनैमित्तिककाम्यश्रौतस्मार्तकर्मणां प्रैषमन्त्रसमुच्चार्य परित्यागः २ कर्मत्यागान्न संन्यासो

न प्रैषोच्चारणेन तु, सन्धौ जीवात्मनोरैक्यं संन्यासः परिकीर्तितः ३ स कुटीचकबहूदकहंसपरमहंसभेदाच्चतुर्विधः ल० त० श०[११८-१४४ पृष्ठे] द्र०।

संयमत्वम्—इन्द्रियनिग्रहत्वम् ॥ २४९३ ॥

संयोगः—विद्यमानयोरप्राप्तयोः प्राप्तिः १ अप्राप्तिपूर्विका प्राप्तिर्वा २ * जन्यद्रव्यवृत्तित्वे सति स्वसमानाधिकरणाभावप्रतियोगिविभागभिन्नगुणः ३ संयुक्तव्यवहार (विषयवृत्तिगुणत्वव्याप्यजातिमान्४) असाधारणकारणम्। दण्डादिवारणाय संयुक्तव्यवहारेति, कालादिवारणायासाधारणेति पु० २४९८

संवादः—परस्परं जनानां सम्यङ्निर्णयपूर्वकं वादो भाषणम् ॥ २४९९ ॥

संवादिभ्रमः—सफलप्रवृत्तिजनको भ्रमः ॥२५००॥

संशयः—एकस्मिन्धर्मिणि विरुद्ध (भावाभावप्रकारकज्ञानम् १) कोटिद्वयावगाहिज्ञानम् २ एकत्र भासमानविरुद्धनानाकोटिकज्ञानं वा। आम्रा वा पनसा वेति समूहालम्बनसंशयेऽव्याप्तिवारणाय

एकत्रेति, स्थाणुपुरुषाविति समूहालम्बनभ्रमेऽति-व्याप्तिवारणाय भासमानेत्युक्तम्, समूहालम्बन-प्रमायामतिव्याप्तिवारणाय विरुद्धेत्युक्तम् ३ स्वीयै-ककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रति-बन्धकतावच्छेदकीभूतापरकोटिप्रकारताशालिज्ञा-नमिति ग्रं० ४ स द्विविधः प्रमाणगतः प्रमेयग-तश्चेति ॥ २९०४ ॥

**संसर्गाभावः**—संसर्गप्रतियोगिकोऽभावः १ तादा-त्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकोभावो वा।

**संसारः**—स्वादृष्टोपनिबद्धशरीरपरिग्रह इति कलाप-टीकायाम् १ मिथ्याज्ञानजन्यसंस्काररूपवासनेति पु० २ ज्ञातृज्ञाने च ज्ञेयञ्च भोक्तृभोग्ये च भोज-नम्, कर्त्ता च करणं कर्म संसारो नवधा भवेत्।

**संस्कारः**—स्वाश्रयस्य प्रागुद्भूतावस्थासमानावस्था-न्तरापादकोऽतीन्द्रियो धर्म इत्युपदेशसाहस्रीव्या-ख्यायां रामतीर्थः १ आत्मविशेषगुणवृत्तिमूर्त्तवृ-त्तिवृत्तिगुणत्वव्याप्यजातिमान्। घटादिवारणाय

गुणत्वव्याप्येति, संयोगादिवारणायात्मविशेषगुणवृत्तीति नैयायिकाः ॥ २९१० ॥

संस्कार्यत्वम्—क्रियाजनिताऽतिशयशालित्वम् ।

संस्कृतत्वम्—व्याकरणलक्षणाधीनसाधनयुक्तत्वम् ।

संहिता—धर्मबोधार्थं रचिता, यथा मनुभारतादिः १ सम्यक् हितं प्रतिपाद्यं यस्याः ॥ २९१४ ॥

स्तुतिः—आरोप्यगुणकथनमिति प्रामाणिकाः १ गुणिनिष्ठगुणाभिधानम् ॥ २९१६ ॥

स्तुत्यर्थवादः—साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम्

स्तोत्रम्—सामगानविशिष्टमन्त्रकरणकं गुणाभिधानम्

स्तोभत्वम्—अर्थशून्यत्वे सत्युच्चारणमात्रप्रयोजनत्वम्

स्त्रीपुंभेदः—पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा, शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम् ।

स्थायित्वम्—समधिककालवृत्तित्वम् ॥ २९२९ ॥

स्थूलशरीरत्वम्—पञ्चीकृतपञ्चभूतकार्यत्वे सति दृग्गोचरत्वम् १ शुक्रशोणितनिर्मितत्वे सत्यस्थ्यादिसमुदायत्वं वा ॥ २९२७ ॥

स्नानम्–
मार्जनम् } शरीरमज्जनम् १ कायप्रक्षालनं वा २९२९

स्नेहः–चूर्णादिपिण्डीभावहेतुर्गुणः १ * दर्शने स्पर्शने वापि श्रवणे भाषणेऽपि वा, यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥ २९३१ ॥

स्पर्शः–त्वगिन्द्रियमात्रग्राह्यो गुणः ॥ २९३२ ॥

स्पष्टब्रह्मलिङ्गकत्वम्—विषयवाक्ये ब्रह्मधर्मतया निर्णीतब्रह्मलिङ्गकत्वम्, यथाऽन्तरधिकरणविषयवाक्ये ब्रह्मधर्मतया निर्णीतं सर्वदुरितोदितत्वं फलवचनोपोद्बलनेन जीवादावसम्भवेन ब्रह्मण्येव संक्रमनीयं ब्रह्मधर्मतया निर्णीतं विद्यते इति तदिति चतुःसूत्रीटिप्पण्याम् । [नित्यः शब्दः

स्फोटः–वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको

स्मृतिः-चिरानुभूतार्थस्मरणशक्तिः १ *अनुभूतविषयाधिकानवगाहिज्ञानमिति चण्डीटीकायोगमञ्जर्योः २ प्रमाकरणाजन्यत्वे सति संस्कारजन्यज्ञानमिति पु० ३ स्वसमानविषयसंस्कारजन्यं ज्ञानमिति म० ४

स्वाम्याश्रितक्रियाजन्यसंस्कारजन्यज्ञानमिति रसमञ्जर्याम्[१] उद्भूतसंस्कारमात्रजन्यं ज्ञानम्। संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति, प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम्, अनुभवेऽतिव्याप्तिवारणाय संस्कारजन्यमिति, असम्भववारणायोद्भूतेति ॥ २९४२ ॥

स्मृति धर्म शास्त्रम्—वेदार्थस्मरणपूर्वकं रचितं शास्त्रम् १ ऋषिप्रणीतत्वे सति वेदार्थानुभवजन्यत्वे सति वेदार्थानुवादको वा यथा मनुपराशरादिः

स्वत्वम्—शास्त्रसम्मतयथेष्टविनियोगार्हत्वम् २२४५

स्वगतभेदः—स्वावयवैः कृतो भेदः, यथा वृक्षस्य पर्णपुष्पफलादितः ॥ २९४६ ॥

स्वतन्त्रः—कर्तुमकर्तुमन्यथा वा कर्तुं समर्थः १* कारकान्तरव्यापारानधीनत्वे सति कारकत्वं स्वतन्त्रत्वम् २ इतरव्यापारानधीनव्यापारवत्त्वं वा।

---

१ उद्भूतसंस्कारेतराजन्यत्वे सति संस्कारजन्यत्वमित्यर्थः।

**स्वतन्त्रोच्चारणम्**–अन्यदीयस्वार्थतात्पर्यकोच्चारणानधीनोच्चारणम् ॥ २९९० ॥

**स्वतउत्पत्तिकत्वम्** / **स्वतःप्रामाण्यवादः** — आगन्तुकभावकारणानपेक्षज्ञानसा ( मग्रीजन्यत्वम् ) मान्यप्रयोजकप्रयोज्यत्वम् २ दोषाभावसहकृतज्ञानसामान्यसामग्री(जन्यत्वं)प्रयोज्यत्वमिति पु० ३ विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वम् । विज्ञानसामग्रीजन्यत्वमप्रामाण्येप्यस्तीति परतःप्रामाण्यवादिभिश्च स्वीक्रियत इत्यतिव्याप्तिरर्थान्तरता वा स्यात् तन्निवृत्त्यर्थं तदतिरिक्तहेत्वजन्यमित्युक्तमिति तत्त्वप्रदीपिकायाम् ॥ २९९४ ॥

**स्वतोग्राह्यत्वम्** / **ज्ञप्तिस्वतस्त्वम्** — दोषाभा(वे सति यावत्स्वा० )वसहकृतयावत्स्वाश्रयग्राहकसामग्री ( मात्र ) ग्राह्यत्वम् १ यावत्स्वाश्रयग्राहकग्राह्यत्वमिति तत्त्वानुसन्धाने २ ज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वमिति भाषापरिच्छेदटीकायाम् ॥ २९९८ ॥

**स्वतःप्रमात्वम्**—आगन्तुकभावकारणानपेक्षज्ञानसा-
मान्यसामग्रीप्रयोज्यत्वम् ॥ २९५९ ॥

**स्वतःप्रमाणम्**—अन्यप्रमाणनिरपेक्षस्वार्थबोधनसम-
र्थम्, यथाऽऽम्नायवाक्यम् ॥ २९६० ॥

**स्वदेशगतत्वम्**—स्वाश्रयतावच्छेदकान्यदेशानव-
च्छिन्नाश्रयताकत्वम् ॥ २९६१ ॥

**स्वधा**—पित्रुद्देशेन द्रव्यत्यागः, यथा श्राद्धादिः ।

**स्वप्नजाग्रत्**—स्वप्ने मित्रादिप्राप्तिः ॥ २९६३ ॥

**स्वप्नसुषुप्तिः**—जाग्रद्दशायां वक्तुमशक्यं यत्किञ्चि-
त्स्वप्नेऽनुभूयते तत् ॥ २९६४ ॥

**स्वप्नस्वप्नः**—स्वप्नेऽपि स्वप्नो मया दृष्ट इति बुद्धिः ।

**स्वप्नावस्था**—इन्द्रियाजन्यविषयगोचरापरोक्षान्तः-
करणवृत्त्यवस्था । जाग्रदवस्थाव्यावृत्त्यर्थमिन्द्रि-
याजन्येति, अविद्यावृत्तिमत्यां सुषुप्तावतिव्याप्ति-
वारणायान्तःकरणेति १ जाग्रद्भोगप्रदकर्मोपरमे
सतीन्द्रियोपरमे जाग्रदनुभवजन्यसंस्कारोद्भूतविष-
यतज्ज्ञानावस्था । सुषुप्तावतिव्याप्तिवारणाय जाग्र-

दादिविशेषणमित्यद्वैतकौ० २ प्रबोधाभावत्वे सति मिथ्यावस्तुदर्शनत्वम् ३ विपरीतदर्शनत्वमिति पु०

**स्वप्रकाशत्वम् स्वयंज्योतिः**– } सजातीयप्रकाशाप्रकाश्यत्वम् १ इतराप्रकाश्यत्वे संविद्विषयत्वे वा सति प्रकाशमानत्वमित्यद्वैतदीपिकायाम् २ स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वम् ४ स्वावच्छिन्नसंविदनपेक्षत्वमित्यद्वैतसिद्धौ ५ अवेद्यत्वे सत्यपरोक्षव्यवहार(विषयत्वम् ६ )योग्यत्वम् । घटादावतिव्याप्तिवारणायावेद्यत्वे सतीति, अतीन्द्रियधर्मादावतिव्याप्तिवारणायापरोक्षेत्यादिविशेष्यमिदं लक्षणं बहुपुस्तकेषु दृष्टम् ७ अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वं वा ८ अन्यानवभास्यत्वे सति स्वव्यतिरिक्तसकलावभासत्वमिति ग्रं०

**स्वभावः**–इतरनिरपेक्षं वस्तुस्वरूपम् १ * जन्मान्तरकृतो धर्माधर्मादिशुभाशुभसंस्कारः॥२९८०॥

---

१ अवेद्यत्वम्–फलाव्याप्यत्वम् ।

**स्वरः**-काकादिकृते वर्णाद्युच्चारणध्वनिविशेषः १ श्रुत्य-नन्तरभावीयः शब्दोऽनुरणनात्मकः, स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते, इति रत्नाकरे।

**स्वरूपयोग्यकारणत्वम्**—कारणतावच्छेदकधर्मवत्त्वम्, यथा वनस्थदण्डः ॥ २९८३ ॥

**स्वरूपलक्षणम्-आत्मभूतलक्षणं** इतरानिरूप्यं लक्षणम् १ स्वरूपमेव-लक्षणं वा, यथा सत्यज्ञानानन्दाः २ स्वरूपं सद्व्यावर्तकम्, यथा प्रकृष्टप्रकाशश्चन्द्र इति ग्रन्थान्तरे ॥ २९८६ ॥

**स्वरूपसम्बन्धः**—प्रतियोग्यनुयोग्यन्यतरात्मकः सम्बन्धः १ सम्बन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यत्वमिति पुस्तकान्तरे ॥ २९८८ ॥

**स्वरूपासिद्धहेत्वाभासः**—पक्षेऽभाववत्त्वम् २९८९

**स्वरूपोपकारकाङ्गम् सन्निपत्योपकारकम्** प्रधानसाधनद्रव्यादिसंस्कार-द्वारा प्रधानोपकारकम्, यथा ज्ञानसाधनान्तःकरणसंस्कारद्वारा निष्कामकर्मानुष्ठानम् ॥ २९९० ॥

स्वाध्यायत्वम्–स्वशाखाऽध्ययनत्वम् ॥ २९९१ ॥
स्वामित्वम्–स्वत्वनिरूपितत्वम् १ * परिव्राजकोपाधिमत्त्वम् २९९३ [ निष्ठालक्षणा ।
स्वारसिकलक्षणा–अधुनातनतात्पर्यविषयीभूतार्थ-
स्वार्थानुमानम्–न्यायाप्रयोज्यानुमानम् २९९५
स्वार्थानुमितिः–स्वस्य व्याप्यप्रतीत्यनन्तरं व्याप-
स्वाहा-देवोद्देशेन हविस्त्यागः २९९८ [कप्रत्ययः
स्वीकारः–अस्वस्य स्वस्य का ( रोव्यापारः १ ) रः करणम् ॥ २९९९ ॥

ह

हत्या–हननम् } प्राणवियोग ( प्रयोजनव्यापारः १ ) अनुकूलव्यापारः ॥ २६०१ ॥
हरिहरः–हरियुक्तो हर इत्यन्योन्यः ॥ २६०२ ॥
हर्षः–चित्तगतसुखाभिव्यञ्जिकामुखविकाशादिहेतुधीवृत्तिः ॥ २६०३ ॥

---

१ स्वशाखात्वम्–परम्परयाध्ययनविषयत्वमनुष्ठानविषयत्वं वा ।

हवनम्–देवाद्युद्देशेन मन्त्रपूर्वकं वह्नौ हविःप्रक्षेपः
हास्यम्–विकृतवेषवाक्चेष्टादिदर्शनजन्यसुखविशेषो
रदविकाशादिहेतुः ॥ २६०५ ॥
हिन्दुः–हीनं दूष(त्वम्) यति इति मेरुतन्त्रे २६०६
हिरण्यगर्भः–समष्टिसूक्ष्मकारणशरीरोपहितं चैत-
न्यम् १ अपञ्चीकृतभूतकार्यसमष्टिसूक्ष्मशरीरोपहि-
तत्वमिति ग्रं० २६०८ [पघातः।
हिंसा–प्राणिवृत्तिच्छेदः १ * अविधिपूर्वकं प्राण्यु-
हेतुः–तृतीयान्तं पञ्चम्यन्तं वा, यथा धूमेन धूमा-
द्वेति १ साध्याविषयकज्ञानजनकवचनमिति ग्रं० २
प्रतिज्ञावाक्यधीजन्यकारणाकाङ्क्षानिवर्तकज्ञानजन-
कहेतुविभक्तिमद्वाक्यत्वमिति चिन्तामणौ ३ स
द्विविधः उत्पादको ज्ञापकश्च । मृदो घटो जायते
इत्यादौ उत्पादकत्वम्, पर्वतो वह्निमान् धूमादि-
त्यादौ ज्ञापकत्वम् ॥ २६१३ ॥
हेत्वाभासः–अनुमितितत्करणान्यतरप्रतिबन्धकय-

थार्थज्ञानविषयः १ पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेण भासमान इति गौतमसूत्रवृत्तौ २ अनुमिति-कारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमिति दीधितौ ॥ २६१६ ॥

हेयत्वम्—हानक्रियाविषयत्वम् ॥ २६१७ ॥

होमः—देवतोद्देशेन ( द्रव्यस्याग्नौ प्रक्षेपः १ ) वह्नौ मन्त्रद्वारा घृतादित्यागः २ अग्निसंयोगानुकूल-क्रियानुकूलघृतादिवृत्तिनोदनादिव्यापार इति दिन-कर्याम् ॥ २६२० ॥

हंससंन्यासी—शिखावर्जं यज्ञोपवीतशिक्यैकदण्डक-मण्डलुधरो ग्रामैकरात्रकृच्छ्रचान्द्रायणपरः२६२१

ह्रीः—अकार्यप्रवृत्त्यारम्भप्रतिबन्धिका लोकलज्जा।

सहजसरलां प्रेम्णा दीर्घां समस्तविशोधिनीं,
सकृदपि कृपादृष्टिं सन्तो दिशन्तु भवद्विधाः।
कथमपि सती पूता सद्यस्तया विषयीकृता,
मम कृतिरियं हित्वा दोषान्भवत्वति सद्गुणा १

स्थितानि ग्रन्थेषु प्रकटमुपदिष्टानि गुरुभिः,
गुणो वा दोषो वा न मम परवाक्यानि वदतः।
परन्त्वस्मिन्नस्ति श्रमफलमिदं यन्निजधिया,
श्रुतीनां युक्तीनामकलिगुरुवाचां च विषयः २

सिद्धान्तरीतिषु मया भ्रमदूषितेन
स्यादन्यथातिलिखितं यदि किञ्चिदस्य।
संशोधने सहृदयास्सदया भवन्तु
सत्सम्प्रदायपरिशीलननिर्विशङ्काः॥ ३ ॥

प्रमादलिखितं त्यक्तं प्रमादालस्यदोषतः।
तत्क्षन्तव्यं बुधैः सद्भिः क्षमा हि विदुषां धनम् ४

यदत्र स्खलितं किञ्चित्प्रमादेन भ्रमेण वा।
तत्सर्वं शोधयन्त्वार्याः कस्य न स्खलितं मनः ५

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥६॥

बहुच्छिद्रं परित्यज्य गुणलेशजिघृक्षया।
परिगृह्णन्त्वदो विज्ञा ऋजवो दम्भवर्जिताः॥७॥

क्षणमात्रं न तिष्ठ(न्ति)मि विना पुस्तकमन्यथा।
मुक्त्वा ग्रन्थादिकं चित्तं क्षणमात्रमसंस्थितम् ८
क्वचिन्मुद्रयितुर्दोषाः क्वचिद्योजयितुस्तथा।
पतिताः शोधनीयास्ते कृपया विदुषां गणैः॥९॥

इति केनचिद्भिक्षुगौरीशङ्करेण सङ्गृहीतः।

समाप्तोऽयं ग्रन्थः।

# सर्वतन्त्रसिद्धान्तपदार्थलक्षणसङ्ग्रहपरिशिष्टम् ।

प्रथमसंस्करणे लक्षितानां केषाञ्चित्पदार्थानां लक्षणान्तराण्यलक्षितानां लक्षणानि च परिशिष्टे प्रदर्श्यन्ते ।



अकस्मात्त्वम्—अनिश्चितकारणकत्वं वा ॥ २ ॥

अघटकत्वम्—तद्विषयत्वाव्यापकविषयतावत्त्वम् १८

अतिदेशः—स्वविषयमुल्लङ्घ्यान्यविषये उपदेशः ३९

अद्भुतः—सिद्धस्य धर्मिणो धर्म्यन्तरावयवैर्योगः ।

अधिकरणम्—कर्तृकर्मद्वारकफलव्यापाराधारः, यथा स्थाल्यामोदनं गृहे पचतीत्यादौ २*

अनात्मभूतलक्षणम्—यल्लक्षणं वस्तुस्वरूपाननुप्रविष्टम्, यथा दण्डो दण्डिनः, इति जैनपरिभाषा ।

अनादरः—यथाकथञ्चित्प्रवृत्तिरनुत्साहः ।

अनिष्टप्रसङ्गः—अनभिमतार्थापादनम् ॥ १०९ ॥

अनुकरणत्वम्—सदृशक्रियादिकरणत्वम् ॥१०६॥

अनुज्ञा—कर्तुरिष्टत्वे सति वक्त्रनुमतत्वम् ॥ ११४ ॥

अनुमतम्—साधुकृतमनेनेत्याद्यनुमोदनरूपमानसपरि-
णामप्रदर्शनम् । [ कुसुमाञ्जल्याम्

अनुवादकत्वम्—गृहीतग्राह्यनुभवमात्रजनकत्वमिति

अन्तर्धानत्वम्—स्वविषयकप्रत्यक्षविरोधिव्यापार-
त्वम्, यथोपाध्यायादन्तर्धत्ते छात्र इत्यादाविति
व्युत्पत्तिवादे ॥ १६१ ॥

अन्वयदृष्टान्तः—साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सः

अपकर्षत्वम्—विद्यमानधर्मापचयत्वम् ॥ १९९ ॥

अपादानत्वम्—परकीयक्रियाजन्यविभागाश्रयत्वम् ।
वृक्षात्पर्णं पततीत्यादौ पर्णादेरपादानत्ववारणाय
परकीयेतीति कारकवादे ॥ २१५ ॥

अपार्थत्वम्—प्रत्येकवाक्यानामन्वितार्थत्वेपि यत्समु-
दायार्थशून्यत्वम् । [ दानम् ।

अभयदानम्—अनन्तप्राणिगणानुग्रहकरं वसत्यादि-

अभीष्टत्वम्—स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम् ।

अलाभविजयः—अलाभेऽपि लाभवत्सन्तोषः ।

अलोकाकाशः—लोकत्रयाद्बहिः यत्र केवलमाकाश-
द्रव्यं वर्तते इत्यार्हताः।

अवधारणत्वम्—एकाकारावगाहिज्ञानत्वम् ॥३०९॥

अव्ययीभावसमासः—नियमतः पूर्वपदार्थविशेष्यक-
बोधजनकसमासः ॥ ३३९ ॥

आकाङ्क्षा—वाक्यसमयग्राहिका २*

आगमनम्—प्रयोक्तृसन्निकृष्टप्रदेशानुयोगिकसंयोगा-
नुकूलव्यापारः ॥ ४०४ ॥

आनुपूर्वी—तदुत्तरत्वविशिष्टतदुत्तरत्वादिः ॥४४१॥

आरम्भकार्यत्वम्—स्वभिन्नत्वे सति समवेतत्वम्।

आराधनम्—गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रिया १)
वितनिष्ठप्रीतिहेतुभूतक्रिया ॥ ४९८ ॥

इङ्गितम्—भ्रूक्षेपकटाक्षवीक्षणादिकायचेष्टाविशेषः।

इच्छा—यत्नसंस्कारभिन्नत्वे सति सम्बन्धानवच्छि-
न्नप्रकारताकत्वमिति लक्षणावल्याम् २

इष्टत्वम्—इच्छाविषयत्वम् ॥ ४९५ ॥

**ईर्ष्या**—उत्कर्षविरोधिधर्मारोपानुकूलव्यापारजनक-
श्चित्तवृत्तिविशेषः ॥ ४९८ ॥

**उत्तरत्वम्**—क्रियाजन्यसंयोगानुयोगित्वम् ॥९१४॥

**उत्पातः**—शुभाशुभसूचको भूतविकारः ॥ ९३२ ॥

**उत्सर्गः**—सामान्यविधानम्, यथा यत्र यत्र चैतन्यं
तत्र तत्र कर्तृत्वमिति सम्भावना ॥ ९३३ ॥

**उत्सर्जनम्**—स्वानुयोगिकप्राप्तवस्तुप्रतियोगिकसम्बं-

**उद्देश्यत्वम्**—इच्छाविषयत्वम् १ * [धविरहेच्छा

**उपक्रमः**—उपायज्ञानपूर्वकारम्भः १ * तात्पर्यनिर्णा-
यको हेतुविशेषः ॥ ९९६ ॥

**उपनिषत्**—ब्रह्मविद्याप्रतिपादकवेदशिरोभागः ९६८

**उपसर्गः**—जन्यबोधविषयीभूतक्रियाविशेषविषयक-
तात्पर्यग्राहकत्वे सति प्राद्यन्यतमः ॥ ४९९ ॥

**उपसर्जनम्**—स्वार्थविशिष्टार्थान्तरबोधकम् ॥९९६॥

**उपसंहारः**—विस्तरेण निरूपितस्य पदार्थस्य सारां-
शकथनेन तन्निरूपणसमापनम् ३ * ग्रन्थतात्पर्या-
वधारकलिङ्गविशेषः ॥ ६०० ॥

उपायः—साक्षात्परम्परया वा यत्किञ्चित्कार्यजनने समर्थः १ उपायतेऽर्थोऽनेन ॥ ६१८ ॥

उपेक्षा—स्वत्वध्वंसमात्रजनकस्त्याग इति मैथिलाः२

उपोद्घातः—स्थानं निमित्तं वक्ता च श्रोता श्रोतृप्रयोजनम्, संबन्धाद्यभिधानं च उपोद्घातः स उच्यते।

उभयत्वम्—अपेक्षाबुद्धिविशेषविषयत्वम् ॥६३३॥

एकपदत्वम्—एकार्थविषयकशक्तिनिरूपकत्वम्, यथा रामः ॥ ६५९ ॥

कनिष्ठत्वम्—अल्पतरस्पन्दान्तरितजन्यत्वम् ६७३

कर्षणम्—देशान्तरसंयोगानुकूलव्यापारानुकूलव्यापारः ॥ ७०४ ॥

काम्यत्वम्—तत्तत्फलेच्छाधीनेच्छाविषयत्वं वा७२२

कोटिः—संशयजनकज्ञानीयप्रकारतावान् ॥ ७६७ ॥

खञ्जत्वम्—संस्थानविशेषशून्यपादवत्त्वम् ॥८०५॥

गतिः—उत्तरदेशसंयोगानुकूलक्रिया ॥ ८१२ ॥

गानम्—आभ्यन्तरयत्नजनितस्वरविशेषाणामभिव्यञ्जकः शब्दः ॥ ८१८ ॥

गीतम्–छान्दस हार्दान्यतरस्वरेण गुणकीर्तनम् १
गुणः–प्रमाऽसाधारणकारणम् १ *
चतुर्थीविभक्तित्वम्–ददात्यर्थधर्मिकसम्प्रदानत्वानुभवकसुप्सजातीयत्वमिति शब्दशक्तिप्रकाशिका।
ज्ञापनम्–ज्ञानानुकूल ( शब्दः १ ) व्यापारः ९४८
ज्येष्ठत्वम्–बहुतरसूर्यस्पन्दान्तरितजन्यत्वम् ९४९
तत्पुरुषसमासः–समासप्रयुक्तलक्षणाशून्योत्तरनामकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वनामकसमासः। पञ्चफलीत्यादिवारणाय सत्यन्तम्, नीलोत्पलादिवारणाय लुप्तेत्यादीति समासवादे ९५८
तृप्तिः–फलेच्छाविच्छेदः ॥ १९० ॥
दक्षिणत्वम्–मेरुव्यवहितदेशावच्छिन्नत्वम् १००३
दण्डत्वम्–ग्रहणपूर्वकशासनत्वम् ॥ १००४ ॥
दर्शनम्–तत्त्वज्ञानसाधनं शास्त्रम् २ *
दूषकत्वम्–सदोषत्वसम्पादकत्वम् ॥ १०२८ ॥
दूषणम्–बाधकप्रमाणोपन्यासरूपयुक्तिभिः खण्डनमिति भूषणसारे ॥ १०३० ॥

देवतात्वम्-मंत्रकरणकहविस्त्यागभागित्वेनोद्देश्यत्वम्

देहवासना—सदन्नपानादिसेवनबलवीर्यादिसंपादनालङ्करणादिभिर्देहसौष्ठवसंपादनाभिनिवेशहेतुरिति कैव.

द्योतकत्वम्—क्रियाविशेषाक्षेपकत्वम् १ * सम्बन्धपरिच्छेदकत्वम् २ स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वमिति लघुमञ्जूषायाम् । [ शेषः

द्रोहः—दुःखजनकक्रियारूपापकारजनकश्चित्तवृत्तिवि-

द्वन्द्वसमासः—परस्परानन्वित ( अर्थकानेकपदघटितत्वम् १ ) समस्यमाननिखिलपदार्थबोधकसमासः ।

द्वितीयाविभक्तित्वम्—तिबन्तपचधातूपस्थाप्यपाकधर्मिककर्मत्वानुभवानुकूलसुप्सजातीयत्वम् १०८९

द्वैतवादः—जीवेश्वरादिभेदनिर्णायकः कथाविशेषः ।

द्वैताद्वैतम्—कार्यात्मना द्वैतं कारणात्मनाऽद्वैतम् ।

धर्मत्वम्—क्रियासाध्यत्वे सति श्रेयस्करत्वमिति लौकिकाः ॥ ११०५ ॥

नपुंसकलिङ्गत्वम्—इदमितिव्यवहारविषयत्वम् ।

नामत्वम्—लिङ्गसङ्ख्यान्वय्यर्थप्रतिपादकत्वम् ।
नियोज्यत्वम्—प्रवर्तकज्ञानोपधायकत्वम् ॥११७९॥
निरूढः—शक्तितुल्यलक्षणयाऽर्थबोधकः शब्दः ।
नैयायिकः—षोडशपदार्थानुसारिन्यायज्ञः ।१२१३।
नोदना—क्रियासु प्रवर्तकं वचनम् ॥ १२१७ ॥
पञ्चमीविभक्तित्वम्—पतधात्वर्थतावच्छेदकरूपाव-
च्छिन्नधर्मिकविभागबोधानुकूलसुप्सजातीयत्वम् ।
परतन्त्रम्—इतरसत्ताधीनसत्ताकम् । [ त्त्वम्
पराजयत्वम्—कृत्यसाध्यत्वधीप्रयुक्तप्रवृत्त्यभावव-
परिचयः—ज्ञातस्य पौनःपुन्येन ज्ञानम् ॥१२९१॥
परिशेषानुमानम्—विशेषाभावसहकृतसामान्यहेतु-
कानुमानमिति ग्रं० १३१० [ कृष्टत्वम्
पर्यन्तत्वम्—तदवधिकविप्रकर्षशून्यत्वे सति तत्सन्नि-
पितृत्वम्—सपिण्डीकरणोत्तरश्राद्धजन्यफलभागित्व-
मिति कृष्णंभट्टी ॥ १३९० ॥
पुंल्लिङ्गत्वम्—अयमितिव्यवहारविषयत्वम् ।१३७२।

पूर्वत्वम्—क्रियाजन्यसंयोगप्रतियोगित्वम् ।१३७९।
पृच्छा—जिज्ञासाविषयकज्ञानानुकूलव्यापारः १३८९
पृथिवी—गन्धसहचरितचतुर्दशगुणवत्त्वम्॥१३८७॥
प्रकरणम्—सङ्गतिप्रदर्शनप्रयोजिकाऽऽकाङ्क्षा १ *
प्रतिकूलत्वम्—विरुद्धपक्षावलम्बित्वम् ॥ १४१० ॥
प्रतिपादनम्—प्रतिपत्त्यनुकूलशब्दप्रयोगः ।१४२०।
प्रतिवादी—वादिप्रयुक्तन्यायविरुद्धन्यायवाक्यप्रयो-
गकर्ता वा १४३७ [ योगः १४३८
प्रतिवादः—वादिप्रयुक्तन्यायवाक्यविरुद्धवाक्यप्र-
प्रथमाविभक्तित्वम्—सङ्केतविशेषसंबन्धेन प्रथमाप-
दवत्त्वम्, एवं द्वितीयादावपि ॥ १४६२ ॥
प्रमाणत्वम्—अगृहीतग्राहिज्ञानकरणत्वमिति मी०४
प्रसङ्ख्यानम्-शब्दयुक्तिप्रत्ययानामावृत्तिः १९२३
प्रार्थना—उत्कर्षप्रतिपादनेच्छा ॥ १९९८ ॥
प्रेयः—देवगुरुमित्रादिविषयः प्रीतिप्रकर्षः १९६०
प्रेरणत्वम्—स्वाभिलषितोपायाज्ञानादप्रवृत्तापकृष्टप्र-

योऽन्यस्योपायविषयकप्रवृत्त्यनुकूलो व्यापार इति सारदर्पणे ॥ १५६३ ॥

फलत्वम्–स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम्।

भाषणम्–यत्किञ्चिज्ज्ञानानुकूलशब्दप्रयोगः १६४२

भाषा–तत्तद्देशस्थजनवर्तननिर्वाहकं वाक्यम् २

भिन्नत्वम्–भेदानुयोगित्वम् १ भेदाधिकरणत्वं वा

भूमिका–प्रयोजनसम्पादिका युक्तिः २

मध्यमावाणी—हृच्चक्रस्थवाय्वभिव्यङ्ग्यस्ततोपि स्थूलात्मा शब्दः। [न्धित्वमिति नै०२

मिथ्यात्वम्–निःस्वरूपत्वमिति बौद्धाः१ कालासंव-

मोक्षः–स्वातन्त्र्यं मृत्युर्वेति चार्वाकाः २ आनन्द-मयपरमात्मनि जीवात्मलय इति त्रिदण्डिनः ७ जीवस्य लिङ्गशरीरापगम इति भास्करीयाः ८ सर्वकर्तृत्वमेकं विहाय वासुदेवस्य सर्वज्ञत्वादीनां कल्याणगुणानामाप्तिमत्त्वे सति भगवद्याथात्म्या-नुभव इति रामानुजीयाः ९ जगत्कर्तृत्व, लक्ष्मी-

पतित्व, श्रीवत्सवर्जं भगवज्ज्ञानायत्तनिर्दुःखपूर्णसुखमिति माध्वाः १० द्विभुजकृष्णेन सह स्वांशाभूतानां जीवानां गोलोके लीलानुभव इति वल्लभीयाः ११ पारमैश्वर्यप्राप्तिरिति माहेश्वराः १२ चन्द्रचूडवपुषः सतः पार्वत्यालिङ्गनमिति कापालिकाः १३ पूर्णात्मतालाभ इत्यभिनवगुप्ताचार्याः १४ पारदरसपानेन देहस्थैर्यमिति रसेश्वरवादिनः १९ स्वर्गादिरिति मीमांसकाः १९ दुःखसाधनशरीरनाशे नित्यनिरतिशयसुखाभिव्यक्तिरिति तदेकदेशिनः २० नित्यसुखसाक्षात्कार इति भट्टाः २१ आत्यन्तिकदुःखप्रागभावपरिपालनमिति प्राभाकराः २२ परा पश्यन्ति मध्यमा वैखरीति वाणीचतुष्टये प्रथमायाः पराख्याया ब्रह्मरूपाया वाण्या दर्शनमिति पाणिनीयाः २३ आत्महानिरित्येके २९ चित्तानुत्पादनमित्यन्ये ३६

मोचनम्—बहिःक्षरणावच्छिन्नव्यापारः॥ १८२९ ॥

याचनम्—स्वीकारानुकूलो व्यापारः ॥ १८९९ ॥

युञ्जानयोगी—चिन्तासहकारेण सकलज्ञानवान्।

योगरूढत्वम्—शास्त्रकल्पितावयवार्थानुसन्धानपूर्वक-समुदायशक्त्यर्थबोधकपदत्वमिति स्फोटचंद्रिकायां

रमणीयत्वम्—लोकोत्तराह्लादजनकज्ञानविषयत्वम् ।

रात्रिः—सूर्यमण्डलादर्शनयोग्यकालः ॥ १८९४ ॥

रूपकम्—उपमानोपमेययोरभेदे साम्यप्रतीतिः ।

लघुत्वम्—शीघ्राल्पोपस्थितिकत्वम् १ शाब्दिकास्तु ह्रस्वसञ्ज्ञकवर्णवृत्तिधर्मविशेषत्वम् ॥ १९२१ ॥

लीला—प्रियानुकरणम् ॥ १९३९ ॥

वाक्यार्थः—वाक्यतात्पर्यविषयः १ साकाङ्क्षपदार्थो निराकाङ्क्षः, यथा गौरित्युक्ते किमित्याकाङ्क्षा भवति, ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति ॥१९७२॥

वादः—स्वाभिमतार्थकथनम् १ *

वार्त्ता—अन्योन्यकथनम् ॥ १९८९ ॥

विकल्पः—पक्षान्तरबोधकः शब्दः १ *

विप्रतिपत्तिः—विरुद्धार्थकवाक्यद्वयजन्यप्रतीतिद्वय-
मिति वे० २०४६ [ गदाधर्याम्
विरोधित्वम्—एकसमयावच्छेदेनैकत्रावर्तमानत्वमिति
विश्वासः—निर्दोषत्वेनाभिमानः ॥ २१०१ ॥
विहितत्वम्—धर्मापादकत्वम् ॥ २११७ ॥
वृत्तिः—शक्तिलक्षणाऽन्यतरात्मकः सम्बन्धः १
व्यञ्जना—मुख्यार्थसंबद्धासंबद्धसाधारणमुख्यार्थबा-
धग्रहाद्यप्रयोज्यप्रसिद्धाप्रसिद्धार्थविषयकधीजनक-
त्वम् ॥ २१९८ ॥
व्यधिकरणत्वम्—तदधिकरणावृत्तित्वम् १ *
व्यर्थत्वम्—स्वसमानाधिकरणावश्याक्लृप्तधर्मान्तर-
घटितत्वम् ॥ २१७२ ॥
शाब्दबोधः—शक्तिलक्षणाऽन्यतरसंबन्धेन पदजन्य-
पदार्थस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वम् ।
शास्त्रत्वम्—लोकानधिगतार्थवक्तृत्वम् २
शास्त्रवासना—अनात्मशास्त्रेषु सकलग्रन्थाभ्यासपा-

ट्ववादिविजिगीषाद्यभिनिवेशहेतुरिति स्वाराज्य-
सिद्धौ १

शास्त्रवासनाजयोपायः—सर्वेषां ग्रन्थानां जन्मसहस्रै-
रप्यध्येतुमशक्यत्वादसारबहुलत्वात्सर्वेषां वादिनां
दुर्जयत्वादात्मपराभवस्यावश्यं भावित्वाद्वृथाश्रमोय-
मिति निरन्तरश्चिन्तनमिति कैवल्यकल्पद्रुमे २ २५६

शास्त्रवासनफलम्-श्रमासूयामानमत्सरमहत्तिरस्का-
रसच्छास्त्रप्रद्वेषादिद्वारा महानर्थम् ॥ २२५९ ॥

शास्त्रवासनाशुद्धा—अध्यात्मशास्त्राभ्यासजन्यावि-
षयदोषदर्शनविवेकवैराग्यादिहेतुः ॥ २२६० ॥

शिक्षा—प्रवृत्तिप्रयोजकेष्टसाधनताज्ञानम् १*

शुद्धाद्वैतत्वम्—इतरसंबन्धानवच्छिन्नकार्यकारणादि-
रूपद्वित्वप्रकारकज्ञानप्रतियोगिकाभाववत्त्वमिति
न्यायकोशे ॥ २२७४ ॥

श्रुतम्—काव्यनाटकादिषु परिचयः ॥ २२९१ ॥

षष्ठीविभक्तित्वम्—तिबन्तधात्वर्थधर्मिकस्वार्थान्वय-

बोधास्वरूपयोग्यत्वे सति प्रथमान्यसुप्त्वम् १ हिनस्त्यर्थहिंसाधर्मिकस्वार्थकर्मत्वानुभवकसुप्सजा-जातीयत्वं वेति शब्दशक्तिप्रकाशिकायाम् ।

सङ्केतः—अर्थबोधजनकः शब्दव्यापारः १

सप्तमीविभक्तित्वम्—पचधात्वर्थतावच्छेदकरूपाव-च्छिन्नधर्मिकस्वार्थाधेयत्वबोधानुकूलसुप्सजातीय-त्वम् १ चैत्रधर्मिकस्वार्थाधिकरणत्वान्वयबोधकसु-प्समानानुपूर्वीकत्वं वेति शब्द०प्र० ॥२३९६॥

सम्प्रदानत्वम्—त्यागानुयोगित्वम् १

सहायता—अन्यकर्तृकक्रियायामप्राधान्येनान्वयित्वं

साधारणधर्मः—तदितरवृत्तित्वे सति तद्वृत्तिर्धर्मः ।

सुन्दरी—विलक्षणसंस्थानावयववती ॥ २४७३ ॥

सृष्टिः—उत्पत्त्यनुकूलव्यापारविशेषः ॥ २४८९ ॥

स्त्रीलिङ्गत्वम्—इयमितिव्यवहारविषयत्वम् २५२१

स्थलम्—तत्तद्व्यवहारजन्यशाब्दबोधविषयः २५२२

स्थानम्—स्वाभिप्रायबोधानुकूला स्थितिः १ मीमां-संकास्तु सन्निधिविशेषत्वं स्थानत्वम् ॥२५२४॥

स्फुटत्वम्—तद्विषयकजिज्ञासानधीनप्रतिपत्तिविषयत्वं
स्फोटत्वम्—अर्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वम् ।
स्वतोग्राह्यत्वम्—प्रामाण्यग्रहप्रतिबन्धकाभावकाली-
नयावत्स्वाश्रयानुव्यवसायग्राह्यत्वमिति मुरारिमिश्रः

## सूचना

परिशिष्टोक्तलक्षणानामग्रिमसंस्करणे
यथास्थाने निवेशो भविष्यति ।



पुस्तकप्राप्तिस्थानम्—
मनभरी देवी ग्राम पुठी पोष्ट जमालपुर (हिसार)

मणिलाल इच्छाराम देसाई 'गुजराती' पत्रस्य
न्यूस प्रेस बेक—हाउस लेन, कालाघोडा
कोट—मुम्बई.

## सर्वतन्त्रसिद्धान्तपदार्थलक्षणसङ्ग्रहस्थावान्तरवर्त्तिलक्षणानामकारादिक्रमेणानुक्रमणिका ।

# सर्वतन्त्रसिद्धान्तपदार्थलक्षणसङ्ग्रहस्य

## शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | ११ | अकुर्वम् | अकरवम् |
| ५ | १२ | हल्वर्णादि | हल्वर्णादि |
| २६ | ५ | शकस्तित्वम् | शसिकत्वम् |
| ५९ | १० | परः तद्द्विविधम् | परः। तद्द्विविधम्. |
| १३३ | १६ | फलिता)वृत्तिः | फलिता ) |
| १४८ | ७ | आराविषय. | आराध्यविषय. |
| १६३ | ६ | प्रागभावसमा. | प्रागभावासमा. |
| १६३ | ७ | गभावसमान. | गभावासमान. |
| १९९ | १० | शक्तिग्रः | शक्तिग्रहः |
| ९० | ९ | अज्ञानाविष. | अज्ञान( । )विष. |
| ९३ | १६ | तत्त्वं पदा. | तत्त्वंपदा. |
| १९६ | १६ | महः, वा | महः ’ वा |

## विदुषां सूचना ।

अस्य सङ्ग्रहस्यान्यान्यपदार्थानां न्यूनाधिकलक्षणानि येषां विदुषां कण्ठस्थानि सन्ति । अथवा लिखित्वा स्वसमीपे विद्यमानानि भवन्ति, ते यदि निम्नाङ्कितस्थाने प्रेष्यन्ति; तर्हि तेषां नामोटङ्कनपूर्वकलक्षणानि मुद्रितानि भविष्यन्ति ।

ये महानुभावा न्यूनादपि न्यूनानि पञ्चदशलक्षणानि प्रेष्यन्ति-प्रेषितलक्षणयुक्तास्य मुद्रितसङ्ग्रहस्यैकं पुस्तकं तत्सेवायां प्रेष्यामः ।

पुरस्कारजिघृक्षून् प्रत्यन्यापि यथायोग्यं प्रत्युपकृतिं करिष्यामः ।

प्रेषणसङ्केतः—मनोभरी देवी ग्रामश्च पुठ्ठी पत्रालयं जमालपुरम् (हिस्सार)

---

## पुस्तकावश्यकता ।

वामनाचार्यकृत "लक्षणकोश" स्य प्राप्तिस्थानं यदि केचिन्महात्मानो ज्ञापयिष्यन्ति—तर्हि तेषां यथा योग्यसेवां कृत्वा तत्कृतज्ञतामपि स्वीकरिष्यामः । अतः परोपकार-निरताः परेच्छापूरका विद्वद्वाराः मदावश्यकतां श्रुत्वा लक्षणकोशप्राप्तिसङ्केतसूचकं पत्रं प्रेषयिष्यन्ति ।

अस्य कोशस्य प्रमाणं तैर्वामनाचार्यैः स्वयमेव स्वकृत काव्यप्रकाशटिप्पण्यां दत्तम् ।

पत्र व्यवहार सङ्केतस्त्वित्थम्—मनोभरी देवी ग्रामश्च पुठ्ठी पत्रालयं जमालपुरम् (हिस्सार)

